मीशप्रसादस्य बन्धनिवृत्तिहेतुत्वरूपम् । प्रसादस्य दर्शनहेतुत्वज्ञापक-मस्ति तस्मादित्यर्थः ॥ ५ ॥

## ॥ अहिकुण्डलाधिकरणम् ॥ १५ ॥

(२८) ॐ **उभयव्यपदेशात्त्वहिकुण्डलवत्** ॐ ॥ ब्रह्म आनन्दगुणकं तद्रूपञ्च भवति । कुतः उभयव्यपदेशात् आनन्दो ब्रह्म (तै. ३-६) आनन्दं ब्रह्मणः (तै. २-४) इत्यादिश्रुतिषु गुणात्मकत्वेन गुणित्वेन च ब्रह्मणः उक्तत्वात् । तदपि कथम् । अहिकुण्डलवत् यथाऽहेः सर्पस्य । कुण्डलत्वं कुण्डलित्वञ्च । विशेषात्तथेत्यर्थः ॥ १ ॥

(२९) ॐ **प्रकाशाश्रयवद्वा तेजस्त्वात्** ॐ ॥ यथा प्रकाशाश्रयस्यादित्यस्य प्रकाशरूपत्वं तदाश्रयत्वञ्च तद्वत् ब्रह्मणोऽपि । अन्यपरित्यागेनादित्यदृष्टान्ते को हेतुरित्यत उक्तम् । तेजस्त्वादिति । ब्रह्मादित्ययोरुभयोरपि तेजोरूपत्वात्तदभिप्रायेण तद्दृष्टान्तीकरणमित्यर्थः ॥ २ ॥

(३०) ॐ **पूर्ववद्वा** ॐ ॥ यथा कालः पूर्वेणाभिन्नोऽपि पूर्वकाल इति पूर्वपदेन विशिष्यते तथा ब्रह्म आनन्देन विशिष्यत इत्यर्थः । आदरार्थं स्थूलसूक्ष्मबुद्धिविवक्षया वा दृष्टान्तत्रयोक्तिः ॥ ३ ॥

(३१) ॐ **प्रतिषेधाच्च** ॐ ॥ ब्रह्मगुणानां ब्रह्मणश्च "नेह नानास्ति" (कठ. २-४.) इति भेदस्य । प्रतिषेधाच्च ब्रह्म गुणात्मकमित्यर्थः ॥४॥

## ॥ परमताधिकरणम् ॥ १६ ॥

(३२) ॐ **परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः** ॐ ॥ ब्रह्मगुणजातं परं लोकविलक्षणम् । कुतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः "एष सेतुः" (छां. ८-४-१.) इति सेतुत्वोक्तेः । "यतो वाचः" (तै. २-४.) इत्युन्मानशब्दितपूर्णत्वोक्तेः । "एतस्यैवानन्दस्य" (बृ. ६-३-२२.) इति बिम्बप्रतिबिम्बभावसम्बन्धोक्तेः । अन्यज्ज्ञानंत्विति लौकिकानन्दाद्भेदोक्तेश्चेत्यर्थः ॥ १ ॥

(३३) ॐ **दर्शनात्** ॐ ॥ अन्यानन्दादीनां प्रत्यक्षसिद्धत्वान्मनोवाग्विषयत्वाच्च ब्रह्मानन्दस्यातथात्वादेव लोकविलक्षणत्वमित्यर्थः ॥ २ ॥

(३४) ॐ **बुद्ध्यर्थः पादवत्** ॐ ॥ यथा लोकपादविलक्षणेषु जीवाख्यभूतेषु "पादोऽस्य विश्वा भूतानि" (ऋ. १०-९०-३.) इति पादपदप्रयोगः । बुद्ध्यर्थः भूतानां ईशांशत्वज्ञापनार्थः । तथाऽलौकिकेऽपि ब्रह्मानन्दादावानन्दपदप्रयोगः । बुद्ध्यर्थः अनुकूलतया वेदनीयत्वादिधर्मज्ञापनार्थ इत्यर्थः ॥ ३ ॥

॥ **स्थानविशेषाधिकरणम्** ॥ १७ ॥

(३५) ॐ **स्थानविशेषात्प्रकाशादिवत्** ॐ ॥ प्रकाशादिवत् यथा सूर्यकान्तादिगतसूर्यादिप्रतिबिम्बेऽग्निजनकत्वादि वैचित्र्यम् । स्थानविशेषात् सूर्यकान्तादिस्थानगुणवैचित्र्यादुपपद्यते । तथा ब्रह्मादिस्थानगतभक्त्यादिगुणवैचित्र्याद्भगवदानन्दप्रतिबिम्बेषु ब्रह्माद्यानन्देष्वपि वैचित्र्यमुपपद्यत इत्यर्थः ॥ ४ ॥

(३६) ॐ **उपपत्तेश्च** ॐ ॥ बिम्बभूतभगवदैश्वर्यवशादेव प्रतिबिम्बभूतब्रह्माद्यानन्दवैचित्र्योपपत्तेश्च तत्प्रतिबिम्बत्वमितरेषां युक्तमित्यर्थः ॥ ५ ॥

॥ **तथान्यत्वाधिकरणम्** ॥ १८ ॥

(३७) ॐ **तथाऽन्यत्प्रतिषेधात्** ॐ ॥ यथा जीवानन्दादि ब्रह्मानन्दादेर्विलक्षणम् । तथा ध्यानकाले प्रतीतं वासनात्मकं वस्तु । ब्रह्मणोऽन्यत् तद्भिन्नम् । कुतः "यन्मनसा" (केन. १-६.) इति श्रुतावन्यस्य ब्रह्मत्वप्रतिषेधादित्यर्थः ॥ १ ॥

॥ **सर्वगतत्वाधिकरणम्** ॥ १९ ॥

(३८) ॐ **अनेन सर्वगतत्वमायामयशब्दादिभ्यः** ॐ ॥ अनेन भगवतैव । सर्वदेशकालयोः सृष्ट्यादिर्भवति । न तु देशकालान्तरयोरन्येन ।

कुतः सर्वगतत्वमायामयशब्दादिभ्यः "एष सर्वगतः" इति (भाल्लवेय) सर्वगतत्वश्रुतेः । तस्य च सृष्ट्याद्यर्थत्वात् । विष्णौ प्रयुक्तमायामय-शब्दव्याख्यानरूपसर्वत्रेत्यादि (चतुर्वेदशि०) श्रुतेश्चेत्यर्थः । अन्यत्र प्रमाणाभावाच्चेत्यादिशब्दार्थः ॥ ९ ॥

॥ फलाधिकरणम् ॥ २० ॥

(३९) ॐ **फलमत उपपत्तेः** ॐ ॥ फलं स्वर्गादि । अतः ईश्वरादेव भवति । न कर्मतः । कुतः उपपत्तेः ईश्वरस्य चेतनत्वेन फलदातृ-त्वस्य युक्तत्वादित्यर्थः ॥ १ ॥

(४०) ॐ **श्रुतत्वाच्च** ॐ ॥ श्रुतत्वाच्च " रातिः " इति (बृ. ५-९-२८.) श्रुत्युक्तत्वाच्चेश्वरस्यैव फलदातृत्वमित्यर्थः ॥ २ ॥

(४१) ॐ **धर्मं जैमिनिरत एव** ॐ ॥ जैमिनिराचार्यः धर्मं फलप्रदमाह । तं च धर्मम् । अत एव ईश्वरादेव जन्यं मन्यते । कुतः अत एव "एष ह्येव" इति (कौ. ३-८.) श्रुतेरेवेत्यर्थः ॥ ३ ॥

(४२) ॐ **पूर्वं तु बादरायणो हेतुव्यपदेशात्** ॐ ॥ बादरायणाचार्यस्तु । पूर्वं पूर्वोक्तम् । ब्रह्म धर्मं चोभयं फलहेतुं मन्यते । तत्र ब्रह्म-कर्तृत्वेन कर्म करणत्वेन हेतुरिति विशेषस्तुशब्दार्थः । कुतः हेतु-व्यपदेशात् " पुण्येन" इति (प्र. ३-७.) श्रुतौ ब्रह्मकर्मणोः कर्तृत्व-करणत्वरूपहेतुत्वस्योक्तत्वादित्यर्थः ॥ ४ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥**

॥ श्रीः ॥

# ॥ तृतीयाध्यायस्य तृतीयः पादः ॥

## ॥ सर्ववेदाधिकरणम् ॥ १ ॥

(१) ॐ **सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॐ ॥ पूर्वसूत्रे पूर्वपदोदितं ब्रह्म सर्ववेदान्तप्रत्ययम् । बहुव्रीहिः । यथाशक्ति सर्ववेदविषयकश्रवणाद्युत्पन्ननिर्णयजन्यज्ञानविषयम् । कुतः चोदनाद्यविशेषात् "आत्मा" इत्यादि (बृ. ३-४-७.) विधीनामादिपदोदितानां "अत्र ह्येते" (बृ. ३-४-७.) इत्यादिवाक्योक्तयुक्तीनां चाविशेषात् । सर्वाधिकारिसाधारणत्वादित्यर्थः ॥ १ ॥

(२) ॐ **भेदान्नेति चेदेकस्यामपि** ॐ ॥ चेदिति नेति भेदादिति अपीति चावर्तते । तर्हीति शाखायामिति च लभ्यते । तथाच चेद्यदि सर्वशाखोक्तार्थानां भेदात् पृथक्त्वात् । एकैकेन सर्वशाखोक्तं ज्ञेयं न । किन्तु स्वस्वशाखोक्तमेवेत्युच्यते । तर्हि अपि स्वस्वशाखोक्तमपि । न ज्ञेयं स्यात् । कुतः एकस्यां शाखायामपि भेदात् अर्थभेददर्शनात् । अथ यदि तत्र धर्मभेदादेकस्मिन् धर्मिणि भिन्नधर्मविधानात् प्रसङ्गभेदाच्चेति परिहार उच्यते तस्य सर्वशाखोक्तपरिज्ञानेऽपि सम इत्यर्थः ॥ २ ॥

(३) ॐ **स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च** ॐ ॥ स्वाध्यायस्य "स्वाध्यायोऽध्येतव्यः" इति (तै.आ. २-१५.) विधेः । तथात्वेन सर्वसाधारण्येनाध्ययनविधायकत्वेन । समाचारे सर्ववैदिककर्मकरणे । अधिकारात् सर्वेषामधिकारसद्भावाच्च । हीति सूचितायाः "वेदः कृत्स्नोऽधिगन्तव्यः" इति स्मृतेश्च एकैकेनापि सर्वशाखाध्ययनेन ब्रह्म ज्ञातव्यमित्यर्थः ॥ ३ ॥

(४) ॐ **सलिलवच्च तन्नियमः** ॐ ॥ चोऽवधारणे । तन्नियम इत्यत्र पञ्चमीतत्पुरुषकर्मधारयौ । सलिलवत् सलिलमिव । तन्नियमः यथा

सर्वेषां सलिलानां प्रतिबन्धाभावमपेक्ष्यैव समुद्रैकाश्रयत्वनियमः। तथाऽत्रापि तस्याः पुरुषशक्तिमपेक्ष्यैव तन्नियमः। सर्ववेदोक्तप्रकारेण ध्यानेन ब्रह्म ज्ञातव्यमिति नियम इत्यर्थः॥ ४॥

(५) ॐ **दर्शयति च** ॐ॥ श्रुतिः स्मृतिश्च सर्वशाखोक्तमार्गेण ब्रह्म ज्ञातव्यमित्यर्थं दर्शयति ज्ञापयतीत्यर्थः॥ ५॥

**॥ उपसंहाराधिकरणम् ॥ २ ॥**

(६) ॐ **उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च** ॐ॥ विधिशेषवत् विधिविहितस्येव। यथा विधिविहितत्वात्सन्ध्यावन्दनादिकमवश्यं कर्तव्यम्। तथा अर्थाभेदात् भेदो विभागः। सर्ववेदार्थभूतानामानन्दादिगुणानामपहतपाप्मत्वादिदोषाभावानां चाभेदात् अविभागात्। तानविभज्येति यावत्। उपसंहारः सर्वगुणानामप्येकबुध्यारोहणरूपोपसंहारः। "उपास्य एकः" इति (भाल्लवेय) श्रुतौ विहितत्वात्कर्तव्यः। सोऽपि समाने च समानविषय एव। ये ब्रह्मणि योग्याः पूर्णत्वाविरोधिनो गुणाः। तद्विषय एव। नत्वयोग्यरोदनादौ। तथा सत्यनर्थप्राप्तेरित्यर्थः॥ १॥

(७) ॐ **अन्यथात्वं चशब्दादिति चेन्नाविशेषात्** ॐ॥ अन्यथात्वं सर्वगुणोपसंहारः कार्य इत्युक्तस्यान्यथाभावः। तस्याकर्तव्यत्वमेवावश्यमङ्गीकार्यम्। कुतः शब्दात् "आत्मेत्येवोपासीत" इत्यनुपसंहार श्रुतेः (बृ. ३-४-७) इति चेन्न। अविशेषात् एते गुणा नोपसंहार्या इति विशेषप्रमाणाभावात्। सर्वैर्गुणैरित्यविशेषेणोपसंहारे तु विशेषप्रमाणसद्भावाच्चेत्यर्थः। आत्मेत्येवेत्येवकारस्त्वयोगव्यवच्छेदक इति भावः॥ २॥

(८) ॐ **न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्** ॐ॥ परोवरीयस्त्वादिवत् 'यथा स एषः' (छां. १-९-२) इत्युक्तानां निरवधिकसर्वोत्तमत्वरूपपरोवरीयस्त्वादिगुणानामेवोपासनार्थमुपसंहारो न सर्वगुणानाम्।

तद्वत्सर्वगुणोपसंहारो न कर्तव्यो वा। कुतः प्रकरणभेदात् परोवरीयो वैश्वानरादिप्रकरणभेदान्। अन्यथा तन्न स्यादित्यर्थः ॥ ३ ॥

(९) ॐ **संज्ञातश्चेत्तदुक्तमस्ति तु तदपि** ॐ ॥ संज्ञातः सर्वविद्यानां भगवन्नामत्वेन तद्गुणोक्तिरूपत्वात्। सर्वविद्योक्तगुणोपसंहारः कार्य इति चेत्। तदुक्तं तत्र चोद्ये तदिष्टमेवेति समाधानं तेनोपसंहारसूत्रेणोक्तमित्यर्थः। न केवलं युक्तिसिद्धमेतत्। किन्तु तदपि तस्मिन्नर्थे " नाम वा एता " इति (कौण्डिन्यश्रुतेः) प्रमाणमप्यस्ति। तु अस्त्येवेत्यर्थः ॥ ४ ॥

॥ प्राप्त्यधिकरणम् ॥ ३ ॥

(१०) ॐ **प्राप्तेश्च समञ्जसम्** ॐ ॥ उपसंहारानुपसंहारयोः कर्तव्यत्वम्। समञ्जसं युक्तम्। कुतः प्राप्तेः तत्तद्योग्यपुरुषभेदेन तयोर्व्यवस्थितत्वाद्विरोधप्राप्तेश्चेत्यर्थः ॥ १ ॥

॥ सर्वाभेदाधिकरणम् ॥ ४ ॥

(११) ॐ **सर्वाभेदादन्यत्रेमे** ॐ ॥ इमे सर्वगुणोपसंहर्तृब्रह्मादयः। अन्यत्र तदनुपसंहर्तृभ्योऽन्यत्र। तत्फलविलक्षणमहाफले भवन्ति तद्भाजो भवन्ति। कुतः सर्वाभेदात् सर्ववेदोक्तगुणानां अविभागेनोपसंहर्तृत्वेनोपासनादित्यर्थः ॥ १ ॥

॥ आनन्दाधिकरणम् ॥ ५ ॥

(१२) ॐ **आनन्दादयः प्रधानस्य** ॐ ॥ आनन्दादयः आनन्दो ज्ञानं सच्छब्दोदितं निर्दोषत्वं आत्मपदोदितस्वामित्वमित्येते चत्वारो गुणाः। प्रधानस्य मोक्षस्यार्थे सर्वमुमुक्षुभिः उपास्या इत्यर्थः ॥ १ ॥

॥ प्रियशिरस्त्वाधिकरणम् ॥ ६ ॥

(१३) ॐ **प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे** ॐ ॥ सर्वेषामधिकारिणां प्रियशिरस्त्वाद्यप्राप्तिः। 'तस्य प्रियमेव शिरः'

(तै. उ. २-५-२) इत्यादिश्रुत्युक्तप्रियशिरस्त्वादिगुणोपासनयोग्यता नास्ति। किन्तु केषाञ्चिदेव। कुतः हि यस्मात्। तेषां भेदे फलभेदे फलतारतम्ये हि प्रसिद्धा नैव सर्वेति (वाराह) स्मृतिरस्ति। यस्माच्च भेदे फलभेदसिद्ध्यर्थं उपचयापचयौ उपासने वृद्धिह्रासौ। तारतम्यमिति यावत्। अपेक्षितौ तस्मादित्यर्थः ॥ १ ॥

## ॥ इतराधिकरणम् ॥ ७ ॥

(१४) ॐ **इतरेत्वर्थसामान्यात्** ॐ ॥ तुशब्द एवार्थे। अर्थसामान्यात्। ल्यब्लोपनिमित्ता पञ्चमी। उपासनस्य स्वस्वप्राप्यफलसाम्यमपेक्ष्य इतरे चतुर्थ्यः सर्वेभ्यश्चेतरे मध्यमा गुणाः देवादिभिरुपसंहर्तव्या एवेत्यर्थः ॥ १ ॥

## आध्यानाधिकरणम् ॥ ८ ॥

(१५) ॐ **आध्यानाय प्रयोजनाभावात्** ॐ ॥ वेदेषु सर्वगुणोक्तिरुपसंहारश्च आध्यानाय सम्यग्ज्ञानाध्यानार्थम्। क्लृप्तो भवेत्। कुतः प्रयोजनाभावात् गुणोक्तेस्तदुपसंहारस्य च ध्यानं विना प्रयोजनाभावादित्यर्थः ॥ १ ॥

(१६) ॐ **आत्मशब्दाच्च** ॐ ॥ "आत्मेत्येवोपासीत" (बृ. ३-४-७) इत्यत्रात्मेति भावप्रधानं सावधारणञ्च। आत्मत्वमात्रोपास्तिविधायकः शब्द आत्मशब्दः। आत्मेत्येवोपासीतेति शब्दः। तस्माद्गुणान्तरव्यावृत्तिपूर्वमात्मत्वोपास्तिविधायकशब्दादनुपसंहारश्च सिध्यतीति-चार्थः ॥ २ ॥

## आत्मगृहीत्यधिकरणम् ॥ ९ ॥

(१७) ॐ **आत्मगृहीतिरितरवदुत्तरात्** ॐ ॥ यतः इतरवत् "सत्यं-ज्ञानम्" इत्यादि (तै. २-१) वाक्ये सत्यादिपदैरन्येषां गुणानामिवात्मगृहीतिः आत्मैवेति वाक्येऽप्यात्मशब्देन चतुर्णां गुणानां ग्रहणं

सम्भवति । कुतः उत्तरात् "अत्रैवैते (बृ.३-४-७) इत्युत्तर-वाक्याच्च । अतो न चतुर्गुणोपास्त्युक्तेस्तद्विरोध इत्यर्थः ॥ १ ॥

॥ अन्वयाधिकरणम् ॥ १० ॥

(१८) ॐ **अन्वयादिति चेत्स्यादवधारणात्** ॐ ॥ नन्वात्मेति वाक्यस्यानुपसंहारमानत्वमयुक्तम् । कुतः अन्वयात् आत्मशब्दे सर्वगुणानामन्वयात् । तस्य तद्बोधकत्वादिति यावत् । इति चेत् स्यात् यत्परोक्तं तत्तथा स्यादेव । तथापि नानुपपत्तिः । कुतः अवधारणात् । आत्मेत्येवेत्यवधारणात् । न चानिर्णयः । आत्मशब्दो हि ब्रह्मादीन् प्रत्येव सर्वगुणान्वदति नान्यान्प्रतीति निर्णयोपपत्तेरित्यर्थः ।

॥ कार्याधिकरणम् ॥ ११ ॥

(१९) ॐ **कार्याख्यानादपूर्वम्** ॐ ॥ कार्याख्यानात् ध्यानकार्यस्य मोक्षस्यालौकिकत्वोक्तेः । अपूर्वं अलौकिकं गुणजातम् । ध्यातव्यमित्यर्थः ।

**समानाधिकरणम्** ॥ १२ ॥

(२०) ॐ **समान एवञ्चाभेदात्** ॐ ॥ एवञ्च एवमपि । ब्रह्मगुणानामलौकिकत्वेऽपि । वाण्याः समाने योग्यगुणविषय एवोपसंहारः नत्वयोग्यक्रियासु । तत्रत्वभेदात् अभेदमपेक्ष्य त्रिविक्रमत्वादीनां कादाचित्कानां क्रियाणां तत्सजातीयनित्यविक्रान्त्यादिष्वन्तर्भाव्योपसंहारो भवेदित्यर्थः ॥ १ ॥

(२१) ॐ **सम्बन्धादेवमन्यत्रापि** ॐ ॥ हिरण्यगर्भस्य तु अन्यत्रापि त्रिविक्रमत्वादिक्रियाविशेषेऽपि । एवं सर्वदोपसंहारो युज्यते । कुतः सम्बन्धात् क्रियाणां ब्रह्मणा तादात्म्यरूपसम्बन्धेन नित्यत्वादित्यर्थः ॥ २ ॥

## ॥ नवाधिकरणम् ॥ १३ ॥

(२२) ॐ न वा विशेषात् ॐ ॥ आत्मेति वाक्यस्थात्मशब्देन सर्वगुणानां ग्रहणं नवाऽभ्युपगम्यते । कुतः विशेषात् अधिकारियोग्यताविशेषमपेक्ष्य तस्य तद्योग्यगुणाभिधायकत्वादित्यर्थः ॥ १ ॥

(२३) ॐ दर्शयति च ॐ ॥ सर्वानिति (भाल्लवेय) श्रुतिः स्वोक्तार्थं प्रतिपादयतीत्यर्थः ॥ २ ॥

## ॥ सम्भृत्यधिकरणम् ॥ १४ ॥

(२४) ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ ॥ आदिपदेन नञः समाकर्षः । चशब्द एवार्थः । सम्भृतिद्युव्याप्ती सम्यग्भरणप्रकाशव्याप्ती । न सर्वस्योपास्ये । किन्तु देवाद्युपास्ये एव । कुतः अत एवाधिकारियोग्यतायां विशेषसद्भावादेवेत्यर्थः ॥ १ ॥

## ॥ पुरुषाधिकरणम् ॥ १५ ॥

(२५) ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ ॥ पुरुषविद्यायामपि सर्वविद्योत्तमत्वेन प्रतिज्ञातायामपि । पुरुषसूक्ताख्यविद्यायां केषाञ्चिदेवोक्तत्वादितरेषां तत्रोक्तेभ्योऽन्येषाञ्च गुणानामनाम्नानात् । कर्तव्य एव सर्वविद्यागुणोपसंहार इत्यर्थः ॥ १ ॥

## ॥ वेधाधिकरणम् ॥ १६ ॥

(२६) ॐ वेधाद्यर्थभेदात् ॐ ॥ अर्थभेदात् वेधाद्युपासनफलस्य हिंसादेर्यत्यादियोग्यफलाद्विलक्षणत्वात् वेधादि भिन्धि विद्धि शृणीही (बृहत्तन्त्रे) त्युक्तवेधादिकं न सर्वोपास्यमित्यर्थः ॥ १ ॥

## ॥ हान्यधिकरणम् ॥ १७ ॥

(२७) ॐ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॐ ॥ तुरवधारणे । यतः हानौ बन्धहानिरूपमुक्तौ । तदुक्तं मुक्तानां "एतत्साम" इति (तै. ३-१०.) श्रुतावुपासनमुक्तम् । अतो

मोक्षेऽपि तेषामुपासनमस्त्येव । तदपि कुशाच्छन्दस्तुत्युपगानवदेव न विधितः । यथा नियतब्रह्मयज्ञानां द्विजानां नियतसन्ध्योपासनानन्तरमपि कुशैराच्छन्देन स्वेच्छयैव स्तुत्युपगान इवोभयत्र नाम्नोरध्ययनम् । तथा स्वेच्छयैव न विधितः । कुतः उपायनशब्दशेषत्वात् । उपायनं मोक्षः उपासनाविधीनां मोक्षवाक्यशेषत्वादित्यर्थः । तथाच मोक्षार्थो उपासनाविधयः कथं तत्रापि ता विदध्युरित्यर्थः ॥१॥

(२८) **ॐ साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॐ** ॥ साम्पराये मोक्षे । उपासनं स्वेच्छयैवेत्यङ्गीकार्यम् । न त्वनिष्टनिवृत्त्यर्थम् । कुतः तर्तव्याभावात् मुक्तेः परिहर्तव्यानिष्टस्यैवाभावात् । तदपि कुतः हि यस्मात् । अन्ये शाखिनः तथा "तीर्णो हि" इति (बृ. ६-३-२२.) श्रुतिं पठन्ति । तस्मादित्यर्थः ॥ २ ॥

## ॥ छन्दाधिकरणम् ॥ १८ ॥

(२९) **ॐ छन्दत उभयाविरोधात् ॐ** ॥ मुक्ताः छन्दतः स्वेच्छामनुसृत्यैव कर्म कुर्वन्ति न विधितः । कुतः उभयाविरोधात् कर्मकरणाकरणयोः विधिबन्धप्रत्यवाययोः अभावादित्यर्थः ॥ १ ॥

(३०) **ॐ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॐ** ॥ हिर्हेतौ। उभयथा हि बन्धप्रत्यवाययोरभावादेव । गतेः मुक्तेः । पुरुषार्थत्वम् । अन्यथा मुक्तौ बन्धप्रत्यवाययोर्भावे । विरोधः मुक्तेः संसारसमत्वेनापुरुषार्थत्वरूपविरोधः स्यादित्यर्थः ॥ २ ॥

(३१) **ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ** ॥ यथा लोके यागाङ्गविष्णुक्रमणस्य क्रियानुष्ठाननियमः न यागसम्पूर्त्यनन्तरमपि अस्ति । किन्तु कदाचिदेव । तथा मुक्तानां कदाचित्कर्म कुर्वन्ति न वेत्येवं तावदुपपन्नः युक्तः । कुत एतत् । तल्लक्षणार्थोपलब्धेः तल्लक्षणस्य परम्परया कर्मसाध्यस्यार्थस्य मोक्षस्य । उपलब्धेः प्राप्तत्वादित्यर्थः ॥ ३ ॥

## ॥ अनियमाधिकरणम् ॥ १९ ॥

(३२) ॐ **अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम्** ॐ ॥ अनियमः अपरोक्षज्ञानिनां मध्ये केषाञ्चिन्मोक्षः केषाञ्चिन्नेत्येवंरूपव्यवस्थाभावो ज्ञायते । कुतः सर्वेषामपि मोक्षे । अविरोधात् निषेधकाभावात् । किञ्च शब्दानुमानाभ्यां "न कश्चित्" इति (कौण्डिन्य) श्रुतेः तन्मूलकानुमानच्चेत्यर्थः ॥ १ ॥

## ॥ यावदधिकरणम् ॥ २० ॥

(३३) ॐ **यावदधिकारमवस्थितिराधिकारिकाणाम्** ॐ ॥ आधिकारिकाणां योग्यतानुसार्युपासनशीलानां ब्रह्मादीनां स्वस्वाधिकारानुसारेणैव मुक्तौ । अवस्थितिः । अवस्थितानामुपासनावत्तारतम्येनैव मुक्तौ तेषां फलमित्यर्थः ॥ १ ॥

(३४) ॐ **अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्** ॐ ॥ तुशब्दोऽप्यर्थः । अक्षरधियां ब्रह्मज्ञानिनाम् । विषमत्वेप्यविरोधः विरोधो नास्ति । कुतः ब्रह्मधीत्वात् । किञ्च सामान्यतद्भावाभ्यां सर्वेषां दोषाभावात् उत्तमेभ्यः अधमानां उपकारभावाच्च । कथम् । औपसदवत् सच्छिष्यवत् । किञ्च तदुक्तं तत् असमत्वेऽपि विरोधो नास्तीत्येतत् "नाना" इति तुरश्रुतावुक्तमतोऽप्यविरोध इत्यर्थः ॥ २ ॥

## ॥ इयदामननाधिकरणम् ॥ २१ ॥

(३५) ॐ **इयदामननात्** ॐ ॥ अधिकारितारतम्यं इयदेव प्राणावधिकमेव । कुतः आमननात् "प्राणो वाव" इति (कौण्ठरव्य) श्रुतेरित्यर्थः ॥१॥

(३६) ॐ **अन्तरा भूतग्रामवदिति चेत्तदुक्तम्** ॐ ॥ भूतग्रामवत् यथा नामादिप्राणसमूहे एकस्मादेक उत्तमो दृष्टः । तथा अन्तरा परमात्मानं श्रियञ्च विना प्राणादप्युत्तमोऽस्त्विति चेत् । नेति शेषः । यत-

स्तदुक्तं तत्र प्राणादुत्तमाभात्रे नहीति (कौण्ठरव्य) प्रमाणमुक्तम् । अत इत्यर्थः ॥ २ ॥

(३७) ॐ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॐ॥ अन्यथा प्राणादप्युत्तमाभावे । प्राणपरमात्मनोर्भेदानुपपत्तिरिति चेन्न । कुतः यतः उपदेशवत् यथा श्रुतावुक्तं तथाऽङ्गीक्रियते । अतो नोक्तदोष इत्यर्थः ॥ ३ ॥

## ॥ व्यतिहाराधिकरणम् ॥ २२ ॥

(३८) ॐ व्यतिहारो विशिंषन्ति हीतरवत् ॐ ॥ व्यतिहारः प्राणप्रकरणादनन्तरं विष्णोः प्रकरणात् प्राक् प्रश्नप्रतिवचनयोरध्याहारः कार्यः । कुतः हि यस्मात् । इतरवत् नामादितो वागादिकमिव प्राणवादिनः सकाशात् सत्याख्यविष्णुवादिनः छन्दोगाः "एष तु वा" इति (छां. ७-१६.) तुशब्देन विशिंषन्ति व्यावर्तयन्ति । तस्मादित्यर्थः ॥ १ ॥

## ॥ सत्याधिकरणम् ॥ २३ ॥

(३९) ॐ सैव हि सत्यादयः ॐ ॥ हि यस्मात् । सत्याद्याः अह्मात्मान्ताः पदार्थाः । सैव ईश्वराख्यपरदेवतैव । तस्मात्प्राणाधिकाः बहवः न । किन्तु श्रीतदीशावेवेत्यर्थः ॥ १ ॥

## ॥ कामाधिकरणम् ॥ २४ ॥

(४०) ॐ कामादितरत्र तत्र चायतनादिभ्यः ॐ ॥ लक्ष्मीः तत्र भगवत्समीपे स्थिता सती । इतरत्र च भूम्यादावपि । कामात् ईश्वरेच्छयैवावतारान्करोति । कुतः आयतनादिभ्यः सर्वगतत्वप्रतिपादकसर्वायतनेत्यादिश्रुत्यादिभ्य इत्यर्थः ॥ १ ॥

(४१) ॐ आदरादलोपः ॐ ॥ आदरात् भगवति निरुपाधिकभक्त्यतिशयात् । अलोपः श्रियो भगवदुपासनाभावो नेत्यर्थः ॥ २ ॥

(४२) ॐ **उपस्थितेस्तद्वचनात्** ॐ ॥ श्रियो नित्यमुक्तत्वं युज्यते । कुतः उपस्थितेः हरिसमीपे सदा स्थितेः । श्रियो नित्यसमीपस्थत्वं च । तद्वचनात् " द्वावेतौ " इति (गौपवनश्रुतेः) नित्यसम्बन्धित्वबचनात् । ज्ञायत इत्यर्थः ॥ ३ ॥

॥ **निर्धारणाधिकरणम्** ॥ २५ ॥

(४३) ॐ **तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्** ॐ ॥ यतस्तन्निर्धारणार्थनियमः वेदार्थनिश्चयो वेदार्थनियमश्चेत्येतद्रूपम् । श्रवणमननफलं । ध्यानफलभूतायाः । तद्दृष्टेः ब्रह्मदर्शनात् । पृथगेव-भिन्नमेव । अतो न ब्रह्मदृष्टिः श्रवणादिना भवतीत्यर्थः । तथापि न श्रवणमननवैयर्थ्यम् । कुतः हि यस्मात् । अप्रतिबन्धः ब्रह्मदृष्टिप्रति-बन्धकनिवृत्तिः । तन्निश्चयः तन्नियमद्वारा श्रवणमननयोः फलम् । अतो ध्यानसाध्यापि दृष्टिः प्रतिबन्धकनिवृत्तिद्वारा श्रवणादिसाध्या भवति । तदर्थं श्रवणादिकमपि कार्यमेवेत्यर्थः । हि शब्देन " आत्मा-वा अरे " इति (बृ. ४-४-५) श्रुतिः सूचिता ॥ १ ॥

॥ **प्रदानाधिकरणम्** ॥ २६ ॥

(४४) ॐ **प्रदानवदेव हि तदुक्तम्** ॐ ॥ प्रदानवत् सम्यक् प्रीतिपूर्वकं गुरू-पदेशयुक्तमेव श्रवणादिकं ज्ञानसाधनं न केवलम् । कुतः हि यतः । तदुक्तम् । तस्य ज्ञानस्य गुरुप्रसादाधीनत्वं " आचार्यवान् " इति (छां. ३-१४-२) श्रुतावुक्तमत इत्यर्थः ॥ १ ॥

॥ **लिङ्गभूयस्त्वाधिकरणम्** ॥ २७ ॥

(४५) ॐ **लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि** ॐ ॥ तत् गुरुप्रसादपूर्वक-प्रदानमात्रम् । बलीयः अतिशयेन बलवत् । कुतः लिङ्गभूयस्त्वात् वृषभहंसजलवायसरूपेभ्यो वाय्वग्निवरुणेभ्यः श्रुतविद्येनापि सत्य-

कामेन वचनात् । लिङ्गभूयस्त्वात् गुरुप्रदानादिरूपलिङ्गबाहुल्यदर्शनात् । तथापि तदपि श्रवणादिकमपि कार्यम । कुतः " श्रोतव्यः " इति (बृ. ४-४-५) श्रुतेरित्यर्थः । हि शब्दः श्रुतिसूचकः ॥ १ ॥

## ॥ पूर्वविकल्पाधिकरणम् ॥ २८ ॥

(४६) **ॐ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॐ** ॥ क्रियामानसवत् मानसक्रियारूपध्याने यथा विकल्पः तथा पूर्वविकल्पः पूर्वप्राप्तेन गुरुणा समस्य पश्चात्प्राप्तस्य गुरोः । विकल्पः ग्राह्यो वा नवेति विकल्पः स्यात् । न तु स्वीकार्य एवेति विधिः । कुतः प्रकरणात् प्रकृष्टानुग्रहमपेक्ष्य गुरोः स्वीकार्यत्वादिति भावः ॥ १ ॥

(४७) **ॐ अतिदेशाच्च ॐ** ॥ पूर्वगुरुणैव स्वसमोत्तमगुरुस्वीकारायातिदेशात् । " यथा " इति पौष्यायणश्रुत्यातिदिश्यमानत्वात् । युक्तमेव पश्चात्तनस्वीकरणमित्यर्थः ॥ २ ॥

## ॥ विद्याधिकरणम् ॥ २९ ॥

(४८) **ॐ विद्यैव तु निर्धारणात् ॐ** ॥ " नान्यः पन्थाः " इति (श्वे. ३-८) निर्धारणात् अन्यनिषेधेन ज्ञानस्यैव मोक्षसाधनत्वनिश्चयात् । विद्यैव मोक्षसाधनं न कर्मादिकमित्यर्थः । श्रुतेः प्राबल्यद्योतकस्तु-शब्दः ॥ १ ॥

(४९) **ॐ दर्शनाच्च ॐ** ॥ न केवलं परोक्षज्ञप्तिरूपविद्ययैव मोक्षः । किन्तु दर्शनाच्च ब्रह्मसाक्षात्कारादपि । अतो न ध्यानवैयर्थ्यमित्यर्थः ॥ २ ॥

## ॥ श्रुत्यधिकरणम् ॥ ३० ॥

(५०) **ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ** ॥ मोक्षस्य ज्ञानसाध्यत्वेऽबाधःकर्मणैवेति स्मृतिविरोधो नास्ति कुतः । श्रुत्यादिबलीयस्त्वात्

ज्ञानस्य मोक्षसाधकत्वोपपादकत्वं "एवं विदित्वा" इत्यादिश्रुतिलिङ्गादेरतिबलवत्वेन स्मृतिगतैवशब्दस्यायोगव्यवच्छेदार्थत्वोपपत्तेरित्यर्थः। एतत्सूचनाय चशब्दः ॥ १ ॥

॥ अनुबन्धाधिकरणम् ॥ ३१ ॥

(५१) ॐ अनुबन्धादिभ्यः ॐ ॥ न केवलं श्रवणादिना। नापि प्रबलगुरुप्रसादेन ब्रह्मदर्शनं भवति। किन्त्वनुबन्धशब्दितहरिगुरुभक्तिशमादिभ्यश्चेत्यर्थः ॥ १ ॥

॥ प्रज्ञान्तराधिकरणम् ॥ ३२ ॥

(५२) ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तं ॐ ॥ प्रज्ञान्तरं प्रज्ञाविशेषः। ध्यानमिति यावत्। तस्य पृथक्त्ववत् अनेकप्रकारत्ववत्। तदनुसारेण दृष्टिश्च ब्रह्मदृष्टिरपि अनेकप्रकारा न सर्वेषामेकविधा। किञ्च तदुक्तम्। तद्दृष्टेरनेकविधत्वं "अन्तर्दृष्टयो" इति (कमठ) श्रुतावुक्तञ्चेत्यर्थः ॥१॥

॥ न सामान्याधिकरणम् ॥ ३३ ॥

(५३) ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ ॥ मृत्युवत् मृत्युमात्रानन्तरं यथा न मुक्तिः। किन्तु चरममृतिविशेषानन्तरमेव। तद्वदत्रापि भगवद्रूपाणां साम्येऽपि उपलब्धेः। भगवद्दृष्टिसामान्यात् साधारणरूपापरोक्षज्ञानात्। न सर्वेषां मुक्तिः। किन्तु स्वस्वबिम्बदर्शनादेव। न चैवं सामान्यदर्शनस्य वैफल्यम्। तस्य महरादिलोकप्राप्तिसाधनत्वात्। न चैतावता तस्य मोक्षहेतुत्वं प्राप्नोति। हि यतः। लोकापत्तिः लोकप्राप्तिमात्रं न मुक्तिः। तस्मादित्यर्थः। हीत्यनेन सामान्यदर्शनादि (नारायणतन्त्रे) त्यादि प्रमाणप्रसिद्धिश्च सूचिता ॥

॥ परेणाधिकरणम् ॥ ३४ ॥

(५४) ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ तुरपि यद्यपि। परेण च परमात्मनैव। ब्रह्मदर्शनम्। तथापि शब्दस्य

" भक्तिरेवैनमिति " (माठर) श्रुतेः ताद्विध्यं परमात्मन इव भक्तेः स्वातन्त्र्येण ब्रह्मदर्शनहेतुत्ववाचित्वं युज्यते। कुतः दर्शनादौ कारणत्वादिति हेतुरुपस्कर्तव्यः। यद्वा परेण वाच्येन निमित्तेन शब्दस्य भक्तिरिति श्रुतेः। ताद्विध्यं युक्तमित्यर्थः। तर्हि कथं भक्तिरिति वाक्येन सत्स्वप्यन्यसाधनेषु अनुबन्धो भक्तिः विशिष्योच्यत इत्यत उक्तम्। भूयस्त्वादिति। तस्याः साधनेषु। भूयस्त्वात् प्राधान्यात्। तदभिप्रायेणानुबन्धो भक्तिर्विशिष्योच्यत इत्यर्थः॥ १॥

## ॥ एकाधिकरणम् ॥ ३५ ॥

(५५) ॐ **एक आत्मनः शरीरे भावात्** ॐ॥ अंशोऽशीतिपदयोः अर्थः एक एव। अंशांशिनोरैक्यमेव। कुतः आत्मनः अंशिनः। इन्द्रादेः शरीरे कर्मनिर्मितशरीरे। अंशस्यार्जुनादेः। भावात् तदभिमानितया सत्त्वादित्यर्थः॥ १॥

(५६) ॐ **व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत्** ॐ॥ उपलब्धिवत् ज्ञानसुखादौ परस्परं भेद इव। अंशांशिनोरपि। व्यतिरेको भेद इति तु न। कुतः तद्भावभावित्वात् अंशस्यांशिकृतभावशब्दितोपासनजन्यफलानुभवित्वात्। अन्यथा तन्नस्यादित्यर्थः॥ २॥

## ॥ अङ्गावबद्धाधिकरणम् ॥ ३६ ॥

(५७) ॐ **अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्** ॐ॥ तुशब्दो विशेषे। अङ्गावबद्धाः हरेरङ्गाश्रिताः। देवा अपि तत्परिवारत्वेन देवैरुपास्याः। तदुपसंहारे तु विशेषोऽस्ति। कः? देवानां प्रतिवेदं सर्ववेदगतासु शाखासु उक्तं यत् ब्रह्माद्यङ्गदेवतावबद्धगुणजातं तत्सर्वं रुद्रादिषु नोपसंहार्यम्। किन्तु योग्यमेवेत्येवं रूप इत्यर्थः। हीत्यनेन समत्वाद्वेति (ब्रह्मतर्क) स्मृतिप्रसिद्धिः सूचिता॥ १॥

(५८) ॐ **मन्त्रादिवद्वाऽविरोधः** ॐ ॥ मन्त्रादिवत् यथाऽग्न्याद्यधमदेवतावाचिमन्त्रविद्यानां ब्रह्माद्युत्तमदेवतावाचित्वं तथाऽविरोधः अधमगुणानामुत्तमेषूपसंहारेऽपि विरोधो नास्तीति वाऽभ्युपगम्यत इत्यर्थः ॥ २ ॥

॥ भूमाधिकरणम् ॥ ३७ ॥

(५९) ॐ **भूम्नः क्रतुवज्ज्यायस्त्वं तथाच दर्शयति** ॐ ॥ क्रतुवत् यथा क्रतुशब्दितप्रायणीयाद्यङ्गजातस्य । विकृतिक्रतुषु अनुवृत्तिं अनुष्ठेयत्वं च । तथा भूम्नः पूर्णत्वगुणस्येतरगुणेभ्यो ज्यायस्त्वं विशिष्टत्वम् । आनन्दादिगुणेष्वनुवृत्तितयोपासनस्य सफलत्वं सर्वोपास्यत्वं चेत्येवं रूपं युज्यते । कुत एतत् हि यस्मात् । "भूमैव देवः" इति (गौपवन) श्रुतिः । तथा दर्शयति प्रतिपादयति । तस्मादित्यर्थः ॥१॥

॥ नानाशब्दाधिकरणम् ॥ ३८ ॥

(६०) ॐ **नाना शब्दादिभेदात्** ॐ ॥ भूमगुणः सर्वैर्यथायोग्यं नानाप्रकारेणोपास्यः । नत्वेकप्रकारेण । कुतः । शब्दादिभेदात् । शब्दादिप्रमाणैरधिकारिभेदात् । भूमगुणस्य नानाप्रकारेण प्रतीतेरित्यर्थः ॥१॥

॥ विकल्पाधिकरणम् ॥ ३९ ॥

(६१) ॐ **विकल्पो विशिष्टफलत्वात्** ॐ ॥ विकल्पः स्वस्वमोक्षसाधनान्यनृसिंहाद्युपासनं कार्यं न वेति द्विविधः प्रकारः स्यात् । कुतः विशिष्टफलत्वात् तथोपासनस्य दुरितनिवृत्तिरूपफलविशेषमपेक्ष्य कर्तव्यत्वेन तदनुसारेण विकल्पस्यैव युक्तत्वादित्यर्थः ॥ १ ॥

॥ काम्याधिकरणम् ॥ ४० ॥

(६२) ॐ **काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्** ॐ ॥ काम्यास्तु काम्यसाधनरूपे कामितसाधनभगवद्गुणास्तु । यथाकामं ।

स्वस्वफले कामानुसारेण । समुच्चीयेरन्नवा अमुमुक्षुभिरुपसंहर्तव्याः मुमुक्षुभिस्तु नोपसंहर्तव्या इति । वा व्यवस्थितविकल्पः स्यात् । कुतः पूर्वहेत्वभावात् मुमुक्षूणां मोक्षेच्छापूर्वकालीनपूर्वसूत्रोक्तान्यकामाख्यहेत्वभावात् । एवं मुमुक्षुभिरेवेश्वरप्रीत्यर्थमुपसंहार्या फलार्थं नोपसंहार्या इति वा विकल्पः स्यादित्यर्थः ॥ १ ॥

॥ अङ्गाधिकरणम् ॥ ४१ ॥

(६३) ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ ॥ अङ्गेषु भगवदङ्गेषु । यथाऽऽश्रयभावः "चक्षोः सूर्योऽजायत" इत्यादौ (ऋ. १०-९०-१३) यथा यथाऽऽश्रयत्वमुक्तं तथा तैरुपासनं कर्तव्यमित्यर्थः ॥ १ ॥

(६४) ॐ शिष्टेश्च ॐ ॥ यस्मिन्निति (पौत्रायण) श्रुतिविहितत्वाच्च तथोपासनं कर्तव्यमित्यर्थः ॥ २ ॥

(६५) ॐ समाहारात् ॐ ॥ समाहारशब्देनोपसंहारफलश्रुतिर्गृह्यते । देवानां स्वस्वजनकाङ्गत्वरूपगुणोपसंहारे फलवचनाच्च । तैस्तथोपसंहृत्योपासनं कर्तव्यमित्यर्थः ॥ ३ ॥

(६६) ॐ गुणसाधारण्यश्रुतेश्च ॐ ॥ गुणानां भगवद्गुणानां । साधारण्यस्य सर्वोपास्यत्वस्य । श्रुतेः "साधारण्यात्" इति (माण्डव्य) श्रुत्युक्तत्वाच्च । देवैस्तथोपासनं कार्यमित्यर्थः ॥ ४ ॥

॥ नवाधिकरणम् ॥ ४२ ॥

(६७) ॐ न वाऽतत्सहभावश्रुतेः ॐ ॥ अङ्गदेवतोपासनं देवान्यैर्नकार्यम् । किन्तु देवैरेवेति वा व्यवस्थितविकल्पः स्यात् । कुतः अतत्सहभावश्रुतेः तत्सहश्रुतेरभावात् । सर्वशाखागतगुणोपासनेन सहाङ्गदेवतोपासनस्य श्रवणादित्यर्थः ॥ १ ॥

(६८) ॐ दर्शनाच्च ॐ ॥ "सत्यो ज्ञान" इति (कमठ) श्रुतौ अस्यार्थस्य दर्शनात् उक्तत्वाच्च देवैरेवाङ्गदेवतोपास्तिः कार्या नान्यैरित्यर्थः ॥२॥

इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां
तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

॥ श्रीः ॥

# ॥ तृतीयाध्यायस्य चतुर्थः पादः ॥

## ॥ पुरुषार्थाधिकरणम् ॥ १ ॥

(१) ॐ **पुरुषार्थोऽतः शब्दादिति बादरायणः** ॐ ॥ पुरुषैरर्थ्यमानं यच्छुभफलं तत्सर्वमपि । अतः ब्रह्मदर्शनाद्भवति न तु मोक्षमात्रम् । कुतः शब्दात् "यं यं" इति (मुं. ३-१-१०) श्रुतेरिति भगवान् बादरायणो मन्यत इत्यर्थः ॥ १ ॥

(२) ॐ **शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः** ॐ ॥ शेषत्वात् ज्ञानस्य कर्माङ्गत्वात् । निमित्तादेव पुरुषार्थवादः "यं यम्" इति (मु. ३-१-१०) श्रुतौ ज्ञानस्य स्वर्गादिपुरुषार्थसाधनत्ववादः न तु मोक्ष इव स्वर्गादौ प्राधान्यात् । तत्कथम् । यथा अन्येषु स्वर्गसाधन-कर्मशेषभूतेषु धनादिषु । यथा स्वर्गं धनादिति प्राधान्यवादः । तथेति जैमिनिराचार्यो मन्यत इत्यर्थः ॥ २ ॥

(३) ॐ **आचारदर्शनात्** ॐ ॥ "यज्ञेन यज्ञं" इति (तै. आ. ३-१२-७) देवानामपि कर्मानुष्ठानश्रुतेश्च न ज्ञानादेव सर्वपुरुषार्थप्राप्तिरित्यर्थः ॥ ३ ॥

(४) ॐ **तच्छ्रुतेः** ॐ ॥ "यदेव विद्यया" इति (छां. १-१-१०) ज्ञानस्य कर्मशेषत्वश्रुतेः न तत्प्रधानमित्यर्थः ॥ ४ ॥

(५) ॐ **समन्वारम्भणात्** ॐ ॥ न कर्मणः ज्ञानशेषत्वम् । तत्साम्यञ्च । किन्तु प्राधान्यम् । कुतः समन्वारम्भणात् "कर्मणैवेति" (माठरश्रु.) प्राधान्येन स्वर्गाद्यारम्भकत्वश्रुतेरित्यर्थः ॥ ५ ॥

(६) ॐ **तद्वतो विधानात्** ॐ ॥ तद्वतः विधानात् "ज्ञानी च कर्माणि" इति (कमठ श्रु.) कर्मविधानात् न ज्ञानिकर्म लीलारूपमित्यर्थः ॥ ६ ॥

(७) ॐ **नियमाच्च** ॐ ॥ ज्ञानिनोऽपि कर्मनियमस्याकरणे प्रत्यवायस्य च "कुर्वन्" इति (ई० २.) श्रुतेश्च । न ज्ञानिकर्म लीलारूपमित्यर्थः ॥ ७ ॥

(८) ॐ **अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्** ॐ ॥ तुशब्दो व्यासमतविशेषद्योतकः । बादरायणस्य त्वेवं ज्ञानादेव सर्वपुरुषार्थप्राप्तिरित्येवं मतम् । कुतः अधिकोपदेशात् अधिकस्य ज्ञानजन्यमोक्षे कर्माधीनातिशयस्य "ज्ञानादेव" इति (कौण्ठरव्य) श्रुतावुक्तत्वात् । किञ्च तद्दर्शनाच्च तस्य ज्ञानजन्यफले कर्मजन्यातिशयस्य राजसूयादिना (भविष्यत्पर्वणि) युधिष्ठिरादावुपलम्भाच्चेत्यर्थः । अत्र भगवन्मतं देवतानिष्ठज्ञानविषयम् । जैमिन्यादिमतं तदन्यमनुष्यनिष्ठज्ञानविषयम् । अतो न विरोध इति ज्ञेयम् ॥ ८ ॥

(९) ॐ **तुल्यं तु दर्शनम्** ॐ ॥ ज्ञानिकर्म न ज्ञानेऽतिशयकृत् । किन्तु ज्ञानफल एव । कुतः यतो दर्शनं ज्ञानम् । तुल्यं तु कर्मकरणाकरणयोः सममेव । अत इत्यर्थः ॥ ९ ॥

## ॥ असार्वत्रिकाधिकरणम् ॥ २ ॥

(१०) ॐ **असार्वत्रिकी** ॐ ॥ ज्ञानाधिकारिता सर्वजनस्थिता नेत्यर्थः ॥१॥

(११) ॐ **विभागः शतवत्** ॐ ॥ विभागः केषाञ्चिज्ज्ञानाधिकारिता अन्येषां नेति विभागः । शतवत् परापरब्रह्माधिकदेवताशतस्यैव सोमाधिकारः नान्येषामिति विभागवत् "नवकोट्यो हि" इत्यादावुक्तत्वादित्यर्थः ॥ २ ॥

(१२) ॐ **अध्ययनमात्रवतः** ॐ ॥ यथाशक्ति सर्ववेदाध्ययनवतो ब्रह्मविद्याधिकारिता नान्यस्येत्यर्थः ॥ ३ ॥

## ॥ अविशेषाधिकरणम् ॥ ३ ॥

(१३) ॐ **नाविशेषात्** ॐ ॥ देवादीनां ज्ञानाधिकारिता । अविशेषात् साम्यात् । न । किन्तु तारतम्यादिनेत्यर्थः ॥ १ ॥

## ॥ स्तुत्यधिकरणम् ॥ ४ ॥

(१४) ॐ **स्तुतयेऽनुमतिर्वा** ॐ ॥ ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषोऽस्त्येव । कुतः यतः यथेष्टाचारो ज्ञानी मुच्यत एवेति ज्ञानिस्तुतय एव "येन स्यात्केन स्यात्" इत्युच्यते । अनुमतिर्वा ज्ञानिनां यथेष्टाचारेऽभ्यनुज्ञामात्रं वा न त्वत्र यथेष्टाचारविधिरत इत्यर्थः ॥ १ ॥

(१५) ॐ **कामकारेण चैके** ॐ ॥ एके शाखिनः । कामकारेण च यथेष्टाचारेणापि ज्ञानिनां मोक्षं "कामचाराः" इति (सामशाखा) श्रुतौ पठन्ति । अतो न ज्ञानिनः सदसत्प्रवृत्त्योर्मोक्षहानिः । किन्तु फले विशेषमात्रमस्तीत्यर्थः ॥ २ ॥

(१६) ॐ **उपमर्दश्च** ॐ ॥ चशब्दोऽप्यर्थः । यदा ज्ञानिनः प्रारब्धकर्मणोऽपि किञ्चिद्भुक्तस्य ज्ञानेनोपमर्दं ईषत्फलह्रासम् । "ओमित्युच्चार्य" इति (तुर) श्रुतावेके शाखिनः पठन्ति । तदा ज्ञानोत्तरकालीनासत्कर्म न मोक्षप्रतिबन्धकमिति किं वर्णनीयमित्यर्थः ॥ ३ ॥

(१७) ॐ **ऊर्ध्वरेतस्सु च शब्दे हि** ॐ ॥ कामचाराणामपि ज्ञानिनां मुक्त्यधिकारवत् कामचाराणां जिज्ञासूनां न ज्ञानाधिकारः । कुतः हि यस्मात् । शब्दे य इममिति (माठर) श्रुतावूर्ध्वरेतस्त्वादिगुणवत्स्वेव ज्ञानोपदेशो विहितः । तस्मादित्यर्थः ॥ ४ ॥

(१८) ॐ **परामर्शं जैमिनिरचोदना चापवदति हि** ॐ ॥ जैमिनिः परामर्शं "येन स्यात्" इति वाक्ये प्रातरुत्थायेत्यादिश्रुत्युक्तसदाचारस्यैव ग्रहणमभ्युपेत्यात्र सदाचारस्यैव स्वेच्छया नियमेनाचरणं प्रतिपाद्यम् । न तु निषिद्धस्य करणमिति मन्यते । कुतः हि यस्मात् ।

अचोदना अनिषिद्धं ज्ञानिना कार्यमिति विध्यभावः अपवदति च प्रत्युत "ब्राह्मणो न हन्तव्यः" इति श्रुतिः विकर्म निषेधति च इति। तस्मादित्यर्थः ॥ ५ ॥

(१९) ॐ **अनुष्ठेयं बादरायणः साम्यश्रुतेः** ॐ ॥ बादरायणः भगवान् बादरायणस्तु। अनुष्ठेयं स्वेच्छया श्रुत्याद्युक्तानुष्ठानयोग्यकिञ्चित्कर्माचरणाभ्यनुज्ञानमेव "येन स्यात्" इति (बृ. ५-१-१.) श्रुतेरर्थः। न तु सर्वकर्मकरणाय यथेष्ठाचारविधिरेवेति मन्यते। कुतः साम्यश्रुतेः केनापि प्रकारेण प्रवृत्तावपि "ईदृश एव" इति ज्ञानिनः साम्योक्तेः ॥ ६ ॥

(२०) ॐ **विधिर्वा धारणवत्** ॐ ॥ यथा वेदधारणविधेः त्रैवर्णिकाधिकारिकत्वमेव न तु सर्वाधिकारिकत्वम्। तथा विधिः ज्ञानिनामेव "येन स्यात्" इति (बृ. ५-१-१.) स्वेच्छाचारविधिः न त्वज्ञानिनामित्यर्थः। वाशब्दः प्रागुक्तपक्षद्वयात् अस्य पक्षान्तरत्वद्योतकः ॥७॥

(२१) ॐ **स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्** ॐ ॥ "केन स्यात्" इति वाक्यं पूर्वोक्तस्तुतिरेव न स्वेच्छाचरणविधिः। कुतः उपादानात् ज्ञानिभिरपि "सन्ध्यामुपासीत" इत्यादि साधारणविधिस्वीकारादिति चेन्न। कुतः अपूर्वत्वात् अशब्दवाच्यपरमात्माधीनत्वादित्यर्थः। तथाच ज्ञानिनः स्वेच्छाचरणविधेरप्यभावे सर्वविध्यतिदूरत्वप्रसङ्गेन परमात्माधीनत्वं न स्यादिति भावः ॥ ८ ॥

(२२) ॐ **भावशब्दाच्च** ॐ ॥ भावः इच्छाभावशब्दघटित "यथाविधानम्" इति (तुर) श्रुतेश्च "केन स्यात्" इत्ययं कामचारविधिरित्यर्थः ॥ ९ ॥

(२३) ॐ **पारिप्लवार्था इति चेन्न विशेषितत्वात्** ॐ ॥ नियमेन सर्वधर्माचरणविधिपक्षस्यानुष्ठेयानां मध्ये स्वेच्छया कतिपयधर्माचरणा-

भ्यनुज्ञानपक्षस्य स्वेच्छाचरणविधिपक्षस्य च परस्परविरुद्धत्वात् । "येन-स्यात् " इत्यादयः पारिप्लवार्थाः अव्यवस्थितार्थका इति चेन्न । कुतः विशेषितत्वात् " त्रेधाहि ज्ञानिनः " इति (गौपवन) श्रुतौ ज्ञानिनां विधिनियतादिपदैर्विशेषितत्वेन तेषामनेकप्रकारत्वस्योक्तत्वादित्यर्थः ॥ १० ॥

(२४) ॐ **तथा चैकवाक्योपबन्धात्** ॐ ॥ उक्तपक्षत्रयानुसारिवाक्यानां अधिकारिभेदमाश्रित्याविरोधेनैकवाक्यतायाः युक्तत्वात् । तथाच श्रुतीनामेकवाक्यत्वे सिद्धे " येन स्यात् " इति वाक्यस्यापि एकवाक्योपबन्धात् अधिकारिभेदेन व्यवस्थितार्थकत्वोपपत्तेः न पारिप्लवार्थत्वमित्यर्थः । तथाच जैमिनिमतं मनुष्यज्ञानविषयम् । व्यासमतं देवताविषयम् । " विधिर्वा " इतिमतं विधिवेत्तृविषयमिति न विरोध इति भावः ॥ ११ ॥

(२५) ॐ **अत एव चाग्नीन्धनाद्यनपेक्षा** ॐ ॥ ज्ञानस्य मोक्षसाधनत्वे अग्नीन्धनाद्यनपेक्षा अग्निहोत्रादिसत्कर्मसापेक्षितत्वं नास्ति । कुतः अत एव कामचाराणामपि मोक्षस्य प्रमाणसिद्धत्वादित्यर्थः ॥ १२ ॥

(२६) ॐ **सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** ॐ ॥ अश्ववत् यथा गतिसाधनाश्वादयः गतिनिष्पत्त्यर्थमेवापेक्ष्यन्ते न तत्फलं ग्रामादि प्राप्त्यर्थम् । तथा मोक्षसाधनज्ञानोत्पत्तावेव । सर्वापेक्षा सर्वधर्मापेक्षा । न तु ज्ञानफलमोक्षेऽपि । कुतः यज्ञादिश्रुतेः " विविदिषन्ति यज्ञेन " इति (बृः ६-४-२२) श्रुतेरित्यर्थः ॥ १३ ॥

(२७) ॐ **शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्** ॐ ॥ यद्यपि ज्ञानेनैव मोक्षो नियतः । तथापि ज्ञानी शमदमाद्युपेतः स्यात् शमदमादियुक्तो भवेत् । कुतः तद्विधेः " आचार्यात् " इति (माठर) श्रुत्या तस्य ज्ञानिनः शमदमादेर्विधा-

नात्। तथापि न ज्ञानिनः शमदमादिवैयर्थ्यम्। कुतः तदङ्गतया ज्ञानाङ्गतया ज्ञानफलोपकार्यमतस्तेषां शमदमादीनामवश्यानुष्ठेयत्वात् अवश्यमनुष्ठानार्हत्वात्। तुशब्दः शमदमादेः पूर्णफलार्थत्वं सूचयति ॥१४॥

(२८) ॐ **सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्** ॐ ॥ चशब्द एवार्थे। ज्ञानिनः सर्वान्नानुमतिः " यदि ह वा अप्येवं वित् " इति निषिद्धानिषिद्धसर्वभक्षणस्याभ्यनुज्ञानश्रुतिः। प्राणात्यये प्राणत्यागकालविषयैव न तु सर्वकालविषया कुतः तद्दर्शनात् तस्मिन्नर्थे " न वा अजीविष्यम् " इति (छां. १-१०-४) श्रुतेः तदर्थरूपलिङ्गदर्शनाच्चेत्यर्थः ॥ १५ ॥

(२९) ॐ **अबाधाच्च** ॐ ॥ ज्ञानिनां निषिद्धाकरणे बाधकाभावाच्च निषिद्धं न कार्यमित्यर्थः ॥ १६ ॥

(३०) ॐ **अपि स्मर्यते** ॐ ॥ तत्करणेऽल्पफलता च "अतीत" इत्यादिना (हरिवंशेषु) कृष्णादिभिः स्मृतिभिः निषिद्धं न कार्यमिति स्मर्यते च। अतोऽपि न निषिद्धं ज्ञानिभिः कार्यमित्यर्थः ॥ १७ ॥

(३१) ॐ **शब्दश्चातोऽकामचारे** ॐ ॥ चो यतः। अकामचारे निषिद्धकर्माभावे। शब्दः " स य एतदेवं वित् " इति (कौण्डिन्य) श्रुतिरस्ति। अतोऽपि न निषिद्धं ज्ञानिना कार्यमित्यर्थः ॥ १८ ॥

(३२) ॐ **विहितत्वाच्चाश्रमकर्मापि** ॐ ॥ चः कारणसमुच्चये। अपिः वर्णाश्रमधर्मसमुच्चये। ज्ञानिना न केवलं निषिद्धमकार्यम्। किन्त्वाश्रमधर्मोऽपि वर्णाश्रमोचितकर्मापि सम्पूर्णफलार्थं कार्यम्। कुतः विहितत्वात् " पश्यन्नपि " इति (कौषारव) श्रुतिविहितत्वादित्यर्थः ॥१९॥

(३३) ॐ **सहकारित्वेन च** ॐ॥ ज्ञानिना सम्पूर्णफलसिद्ध्यै सत्कर्म कार्यमेव। कुतः "यथा राज्ञः" इति (कमठ) श्रुतौ मोक्षफलातिशयकर्मणो ज्ञानसहकारित्वेनोक्तत्वाच्चेत्यर्थः ॥ २० ॥

## ॥ उभयलिङ्गाधिकरणम् ॥ ५ ॥

(३४) ॐ **सर्वथाऽपि तु त एवोभयलिङ्गात्** ॐ ॥ सर्वथापि देशकालगुरूपदेशाद्यनेकसाधनसम्पत्तावपि ये ज्ञानयोग्याः त एव ज्ञानमाप्नुवन्ति । नायोग्याः । कुतः उभयलिङ्गात् । उभयोः योग्यायोग्ययोः इन्द्रविरोचनयोः । विरिञ्चोपदेशसाम्येऽपि सम्यग्विपरीतज्ञानप्राप्तिरूपज्ञापकादेवेत्यर्थः ॥ २१ ॥

(३५) ॐ **अनभिभवं च दर्शयति** ॐ ॥ चो यतः । "दैवीमेव" इति श्रुतिः । न केवलं योग्यायोग्यस्वरूपं दर्शयति । किन्त्वनभिभवं च स्वभावतिरस्काराभिभवञ्च । दर्शयति प्रतिपादयति । अतो नायोग्यानां ज्ञानप्राप्तिरित्यर्थः ॥ २२ ॥

(३६) ॐ **अन्तरा चापि तु तद्दृष्टेः** ॐ ॥ चशब्दोऽवधारणे । तुशब्दो विशेषार्थः। अन्तरा सम्यग्ज्ञानविपरीतज्ञानयोर्मध्ये । स्थितानां नित्यसंसारिणामपि मिश्रस्वभावानभिभव एव । कुतः तद्दृष्टेः तेषां तस्मिन् मिश्रज्ञान एव तस्योदाहृतस्य दृष्टेर्दर्शनादित्यर्थः ॥ २३ ॥

(३७) ॐ **अपि स्मर्यते** ॐ ॥ कृष्णादिभिः (गीतायां) स्वभावानाभिभवः "असुराः" इति (स्कान्दे) स्मर्यते च । अतोऽपि देवदानवमानवस्वभावानां नाभिभव इत्यर्थः ॥ २४ ॥

(३८) ॐ **विशेषानुग्रहं च** ॐ ॥ चशब्दो युक्तिसमुच्चये । यतः "शृण्वे वीर" (ऋ. ६-४७-१६) इति श्रुतिः देवेषु परमेश्वरस्य विशेषानुग्रहञ्च । दर्शयति प्रतिपादयति । अतो देवानामेव सम्यक् ज्ञानतत्फले नान्येषामित्यर्थः ॥ २५ ॥

(३९) ॐ **अतस्त्वितरज्ज्यायो लिङ्गाच्च** ॐ ॥ तुशब्दोऽवधारणे । अतो देवभागादसुरभागस्य कदाप्यूनत्वाभावात् । इतरत् असुरवृन्दमेव । अतो देवभागाज्ज्यायः बहुलम् । कुतः लिङ्गात् "तस्मान्न जनतामियात्" इति (बृ. ३-३-१०) जनसङ्घप्रवेशनिषेधोक्त्यन्यथाऽनुप-

पत्तिरूपलिङ्गात्। चशब्दसूचित "ततः कनीयसा" इति (बृ. ३-३-१) श्रुतेश्चेत्यर्थः ॥ २६ ॥

(४०) ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॐ ॥ तद्भूतस्य तु देवभूतस्यैव। तद्भावः देवताभावः एवमसुरस्यैवासुरभावः जैमिनेराचार्यस्यापि सिद्ध एव। कुतः नियमातद्रूपाभावेभ्यः नासुरा इति चशब्दसूचितश्रुतेः "यो यद्रूपः" इति अतद्रूपशब्दोक्तान्यस्यान्यरूपत्वाभावश्रुतेः। अभावः अभूतिः। देवासुराणाम्। "तं भूतिः" इति (ऐ. आ. २-१-८) इति भावशब्दितश्रुतेरित्यर्थः ॥ २७ ॥

॥ आधिकारिकाधिकरणम् ॥ ६ ॥

(४१) ॐ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॐ ॥ चशब्दः ज्ञानार्थिनां अयोग्याकांक्षावर्जनरूपेतिकर्तव्यतान्तरसूचकः। आधिकारिकमपि देवतापदमपीतरैर्नाकांक्ष्यम्। भगवदैश्वर्यादिकं तु सुतरामिति सूचयितुमपिशब्दः। कुतः पतनानुमानात् अयोग्येच्छात्वतः पतनस्य स्मार्तयुक्तिसिद्धत्वात्। अत एव तदयोगात् अयोग्याकांक्षाया कर्तुमयुक्तत्वादित्यर्थः ॥ १ ॥

(४२) ॐ उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् ॐ ॥ भावशमनवत् भावे चित्ते शमनं भगवन्निष्ठा येषां ते भावशमनाः ऋषयः तत्पदं यथा नाकांक्ष्यम्। किमुत सुतरां देवादिपदमिति सूचयितुमपिशब्दः। इत्येके शाखिनः मन्यन्ते। कुतः यतो ज्ञानार्थिनां यथेतीन्द्रद्युम्नश्रुतौ। तदुक्तं तथोक्तम्। अत इत्यर्थः ॥ २ ॥

(४३) ॐ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॐ ॥ बहिस्तु देवादिपदेभ्योऽन्यत्र। ज्ञाने भक्त्यादिविषये। उभयथाऽप्याकांक्षायां अनाकांक्षायामपि न दोषः। कुतः देवर्षिरिति स्मृतेराचाराच्च नानात्वमिति शुभाचारविधायकशब्दाच्चेत्यर्थः ॥ ३ ॥

## ॥ फलश्रुत्यधिकरणम् ॥ ७ ॥

(४४) ॐ **स्वामिनः फलश्रुतेरित्यात्रेयः** ॐ ॥ समुदायविवक्षया स्वामिन इत्येकवचनम् । तथाच स्वामिनां देवानामेव । ज्ञानफलं भवति न प्रजानाम् । कस्मात् तेषामेव ज्ञानस्वामित्वात् "यदु किञ्च" इति (माध्यन्दिन श्रु.) तेषामेव फलश्रुतेश्चेत्येवमात्रेयाचार्यो मन्यत इत्यर्थः ॥ १ ॥

(४५) ॐ **आर्त्विज्यमित्यौडुलोमिस्तस्मैहि परिक्रियते** ॐ ॥ हि यस्मात् । तस्मै प्रजार्थं देवैः परिक्रियते प्रजाद्वारा ज्ञानं सम्पाद्यते । तस्मादार्त्विज्यं आर्त्विज्यमिवेति शेषः । ऋत्विजां यज्ञफलमिव प्रजानामप्यल्पज्ञानफलमस्तीत्यौडुलोमिराचार्यो मन्यत इत्यर्थः ॥ २ ॥

(४६) ॐ **सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** ॐ ॥ तद्वतो प्रजावतो राज्ञः, शिष्यवतो गुरोश्च । विध्यादिवत् विधानफलयोरिव। यथा प्रजानां शिष्याणां पालनव्याख्यानयोः राजगुरुसहकारित्वेन विधानं फलञ्च तयोरेव मुख्यतया स्वविहितज्ञानदाने प्रजानां सहकार्यन्तरविधिः देवैरनुग्राह्यरूपविशेषसहकार्यन्तरत्वेन करणम् । पक्षेण पक्षत्वेन । तृतीयं आत्रेयौडुलोमिपक्षापेक्षया तृतीयः । अयमेव बादरायणीयपक्ष इत्यर्थः ॥ ३ ॥

## ॥ कृत्स्नभावाधिकरणम् ॥ ८ ॥

(४७) ॐ **कृत्स्नभावात्तु गृहिणोपसंहारः** ॐ ॥ यतः "कुटुम्बे" इति (छां.८-१५-१) श्रुतौ गृहिणो गृहस्थस्यैव मोक्षफलोक्त्या पर्यवस्यति । कृत्स्नभावात् सम्पूर्णगृहस्थधर्मवतो देवानपेक्ष्यैव । अतः श्रुत्यविरोधाच्च यतेरेव सर्वाश्रमिषूत्तमत्वमित्यर्थः ॥ १ ॥

(४८) ॐ **मौनवदितरेषामप्युपदेशात्** ॐ ॥ मौनवत् यतित्वस्येव । इतरेषां अन्याश्रमधर्माणामपि । उपदेशात् "देवा एव ब्रह्मचारिणः" इति (कौण्ठरव्य) श्रुतावुक्तत्वात् । सर्वाश्रमिभ्यो देवानामुत्तमत्वमित्यर्थः ॥ २

॥ अन्वयाधिकरणम् ॥ ९ ॥

(४९) ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥ गुरुः अनाविष्कुर्वन्सभादिषु आविष्कारमकुर्वन्नेव । शिष्येभ्यो विद्यामुपदिशेत् । कुतः अन्वयात् अयोग्यानामपि ज्ञानप्राप्त्या अतिप्रसङ्गरूपयुक्तेरित्यर्थः ॥ १ ॥

॥ ऐहिकाधिकरणम् ॥ १० ॥

(५०) ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ॥ अप्रस्तुतप्रतिबन्ध प्रस्तुतप्रतिबन्धशब्दोक्तप्रारब्धकर्माभावे । अपरोक्षज्ञानमैहिकं श्रवणादीनां सम्पूर्तिजन्मन्येव भवति । प्रतिबन्धे तु जन्मान्तरे भवति । कुतः तद्दर्शनात् "श्रुत्वा" इति (सौपर्ण) श्रुतौ तथा प्रतिपादनादित्यर्थः ॥ १ ॥

॥ मुक्तिफलाधिकरणम् ॥ ११ ॥

(५१) ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ॥ एवं यथा ज्ञानेऽनियमः तथा मुक्तिफलानियमः । मोक्षाख्यफलेऽपि ज्ञानिनः तच्छरीरपातानन्तरमेव मोक्ष इति नियमो नास्ति । किन्तु असति प्रारब्धे तद्देहपातानन्तरमेव । सति तु तद्देहान्तरावसाने मोक्षो भवति । ननु कुत एवं कल्प्यते । ज्ञानजन्मानन्तरं मुक्त्यभावे कदाऽपि मुक्तिर्नेत्येवं कुतो न कल्प्यत इत्यत उक्तम् । तदिति । तस्यां ब्रह्मसंस्थो इति श्रुतौ तस्मिन् ब्रह्मणि अवस्थितस्य । तज्ज्ञानिन इति यावत् । अवधृतेः अमृतत्वमेत्येवेति मोक्षफलावधारणादित्यर्थः । अतः प्रतिबन्धककल्पनेति भावः । उक्तस्य सर्वस्यैतदध्यायार्थस्य प्रसिद्धत्वसूचनार्था द्विरुक्तिः ॥ १ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥**

**॥ ॐ ॥**

॥ श्रीः ॥

# श्रीमद्ब्रह्मसूत्राणि

## श्रीजगन्नाथयतिकृतभाष्यदीपिकासमलङ्कृत-
## श्रीमन्मध्वभाष्यसहितानि
## सूत्रदीपिकासंवलितानि

## ( फलाध्यायः )

---

श्रीचामराजेन्द्रसंस्कृतमहापाठशालायां
द्वैतवेदान्तप्रधानाध्यापकैः
विद्याविशारद न्यायवेदान्तचूडामणि **मागडि श्रीरङ्गनाथाचार्यैः**
मुद्रणावसरे संशोधितानि

---

**श्रीमद्व्यासराजगुरुसार्वभौमविद्याकर्णाटकसिंहासनाधीश्वर-**
**श्रीमद्विद्याप्रसन्नतीर्थश्रीपादानामाज्ञानुसारेण**
**बेङ्गळूरुनगरीस्थया**
**भाष्यदीपिकाप्रकाशनसमित्या**
**प्रकाशितानि**

---

शालिवाहनशकाब्दाः
क्रिस्ताब्दाः

# श्रीमद्ब्रह्मसूत्राधिकरणविषयसूचिका



## चतुर्थाध्यायस्य प्रथमः पादः

| अधि० । | सूत्र० । | विषयाः । |
|---|---|---|
| १ | १-२ | श्रवणमननादीनां आवृत्तिः कर्तव्येति निरूपणम् ॥ |
| २ | ३ | विष्णुः मम स्वामी इत्युपासना कर्तव्येति निरूपणम् ॥ |
| ३ | ४ | नामादिप्रतिमायां ब्रह्मदृष्टिः न कर्तव्या, किन्तु तत्र स्थितत्वेन उपासना कार्यैति निरूपणम् ॥ |
| ४ | ५ | परमात्मनः ब्रह्मत्वेन उपासना कर्तव्येति निरूपणम् ॥ |
| ५ | ६ | परमात्मनः अवयवे आदित्यादिजनकत्वोपासना देवैरेव कार्या इति निरूपणम् ॥ |
| ६ | ७-११ | आसीनस्सन् उपासनां कुर्यादिति निरूपणम् ॥ |
| ७ | १२ | मोक्षपर्यन्तं उपासना कर्तव्या मोक्षेऽपि उपासना अस्ति इति निरूपणम् ॥ |
| ८ | १३-१९ | परमात्माऽपरोक्ष्ये जाते पूर्वतनयोः अनारब्धयोः अनभीष्टयोश्च पुण्यपापयोः नाशः उत्तरयोः अनारब्धयोः अनभीष्टयोः पुण्यपापयोः असंबन्धः भवति। भगवद्द्वेषिणः तमसि पतने सति पुण्यस्य असंबन्धः भवति ज्ञानिकृतपुण्यकर्म मोक्षे अतिशयफलाय भवति इति निरूपणम् ॥ |

---

## चतुर्थाध्यायस्य द्वितीयः पादः

| | | |
|---|---|---|
| १ | १-२ | उमा रुद्रे विलीयते सर्वे देवाः नियम्यनियामकभावानुसारेण नियामकेषु विलीयन्त इति निरूपणम् ॥ |

---

## चतुर्थाध्यायस्य तृतीयः पादः



---

## चतुर्थाध्यायस्य चतुर्थः पादः

॥ श्रीगुरुभ्यो नमः ॥

॥ हरिः ॐ ॥

# ॥ ब्रह्मसूत्रभाष्यम् ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम् ।

## ॥ अथ चतुर्थाध्यायः ॥

### प्रथमः पादः

॥ १. आवृत्त्यधिकरणम् ॥

(१) फलं निगद्यतेऽस्मिन्नध्याये । कर्मनाशाख्यं फलमस्मिन् पादे । नित्यशः कार्यं सर्वथा भाव्यं साधनं प्रथमत उच्यते । प्रायिकत्वाच्चाध्यायानां पादानां च न विरोधः ।

---

॥ अथ चतुर्थाध्यायः ॥

॥ १. आवृत्त्यधिकरणम् ॥

(१) एतदध्यायप्रतिपाद्यं दर्शयति—फलमिति ॥ साध्यमित्यर्थः । ब्रह्मदर्शनेत्यादावुपस्कार्यम् । मोक्षरूपमिति शेषः । 'निगद्यते' कीदृशमिति विचार्यतेऽस्मिन् चतुर्थेऽध्याय इत्यर्थः । मोक्षस्य दर्शनसाध्यत्वं तु 'अनियमः, विद्यैव' इत्यादावेवोक्तमिति भावः । एतत्पादार्थं दर्शयति—कर्मेति । निगद्यत इत्यनुषज्यते । मोक्षलक्षणं हि ज्ञानफलं चतुर्विधं—कर्मक्षयोत्क्रान्तिमार्गभोगभेदात् । तत्रास्मिन् पादे दर्शनपूर्वकालीनसञ्चितकर्मनाशाख्यं फलं निगद्यत इत्यर्थः । नन्वावृत्तिरित्यादिसूत्रे कर्मक्षयोक्त्यप्रतीतेः कथमेतत्पादप्रतिपाद्यकथनमित्यत आह—नित्यश इति । सर्वदैवेत्यर्थः । परमादरेणेत्यप्यादावुपस्कार्यम् । किमर्थमेतदुच्यते इत्यत उक्तं—सर्वथा भाव्यमिति । सर्वप्रकारविघ्नेऽपि यावच्छक्त्यनुष्ठेयमित्यर्थः । नित्यशः करणविशिष्टसाधनं विनाऽपरोक्षज्ञानाभावात्तदभावे च चतुर्विधमोक्षेषु मध्ये एकस्यापि मोक्षस्याभावादस्य सर्वथा भाव्यत्वमिति भावः । तथाच यतः सर्वथा भाव्यमतो

## (२) सू—ॐ ॥ आवृत्तिरसकृदुपदेशात् ॥ ॐ ॥ १ ॥

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. ४-४-५.) इत्यादीनां नाग्निष्टोमादिवदेकवारेणैव फलप्राप्तिः,

---

नित्यशः कार्यमिति योजना। साधनमिति। श्रवणाद्यावृत्त्यादिरूपज्ञान-साधनमित्यर्थः। 'प्रथमतः' सप्ताधिकरण्यां 'उच्यते' कर्तव्यत्वेन प्रतिपाद्यते। सर्ववेदान्तनयेन गतार्थतापरिहाराय—नित्यशः सर्वथेति चोक्तम्। तथाच तत्रोक्तस्यैव साधनस्य सर्वप्रकारविघ्नेऽपि सर्वदा परमादरेण यावच्छक्त्यनुष्ठेयत्वरूपेत्थंभावोऽत्रोच्यत इति न गतार्थतेति भावः। यदि फलाध्याये कर्मक्षयपादे च साधनमेवोच्यते तर्ह्यध्यायपादानामर्थव्यवस्थाऽभावः स्यादित्यत आह—प्रायिकत्वाच्चेति। प्रथमश्चोऽप्यर्थः। द्वितीयस्समुच्चये। तथाचाध्यायपादेष्वर्थान्तरोक्तावपि न व्यवस्थाऽभावलक्षणविरोधो भवति। कुतः ? समन्वयाध्यायानां नामादिपादानां च 'प्रायिकत्वात्' प्राचुर्येण स्वस्वैकार्थप्रतिपादकत्वादिति योजना। न चास्य पादस्य कर्मक्षये प्रायिकत्वानुपपत्तिः, अधिकरणसप्तके साधनविचारात् फलस्य चैकस्मिन्नेवाधिकरणे विचारादिति वा वाच्यम्। योऽर्थः प्रायेण कार्त्स्न्येन प्राधान्येन च यत्र प्रतिपाद्यते सोऽध्यायादिस्तदर्थक इत्यस्यार्थस्यात्र विवक्षितत्वात्। तथाच कर्मक्षयवत् साधनस्य कार्त्स्न्येन प्राधान्येन एतत्पादविचार्यत्वाभावान्नोक्तानुपपत्तिरिति भावः।

(२) तत्र सङ्गत्यादिजिज्ञासाजननाय सूत्रमेवादौ पठति—आवृत्तिरिति ॥ सूत्रे आवृत्तिरिति प्रतिज्ञांशं कर्तव्येति पदाध्याहारेणावृत्तिपदसूचितपूर्वपक्षनिषेधपूर्वकं व्याचष्टे — आत्मेति। इत्यादीनामिति। इति श्रुत्या आदीयन्ते उपादीयन्ते वाच्यतयेति इत्यादीनि तेषामित्यर्थः। श्रवणादीनामिति शेषः। यद्वा—इत्यादिश्रुत्युक्तानां श्रवणादीनामित्यर्थः। अत्रादिशब्देनैतज्जातीयवाक्यान्तरं गृह्यते। प्राप्तिरिति प्रथमा पञ्चम्यर्थे। यत इति शेषो वा। नेत्यावर्तते, इतीति च। अग्निष्टोमादीत्यादिशब्देन दर्शपौर्णमासादिकं गृह्यते आवृत्तिरिति सावधारणमेतत्। एकेन वाक्येनावगतस्य तत्त्वस्य पुनः पुनस्तेन वाक्येन अन्येन वा अवगतिः श्रवणावृत्तिः। युक्त्या मननावृत्तिरप्येवमेव। तथाच 'अग्निष्टोमादिवत्' यथा सकृदनुष्ठिताग्नि-

किन्त्वावृत्तिः कर्तव्या। 'स य एषोऽणिमैतदात्म्यमिदं सर्वम्' (छा. ६-८-७) इत्याद्यसकृदुपदेशात् ॥ १ ॥

(३) सू—ॐ ॥ लिङ्गाच्च ॥ ॐ ॥ २ ॥

ज्योमादेः स्वर्गफलसिद्धिस्तथा श्रवणादीनामपि 'एकवारेण' सकृदनुष्ठानेनैव 'फलप्राप्तेः' फलसिद्धेः 'आत्मा' इत्यादिश्रुत्युक्तानां श्रवणादीनां नावृत्तिरतोऽनावृत्तिरिति पूर्वपक्षो न, किन्तु श्रवणादीनामावृत्तिरेव कर्तव्येति योजना। कुत इत्यतोऽसकृदुपदेशादिति हेत्वंशं व्याचष्टे—स इति। इत्यादीति। इत्यादिरूपो योऽयमसकृदुपदेशः अनेकवारमुक्तिस्तस्मादित्यर्थः। आदिशब्देन 'स आत्मा तत्त्वमसि' (छा. ६-८-७.) इति शिष्टवाक्यं गृह्यते। श्वेतकेतुं प्रति उद्दालकवाक्यमेतत्। प्रकृतः परदेवताख्यो विष्णुः सारत्वात्सः। नियमनात् ज्ञानरूपत्वाद्वा यः। सर्वस्येष्टत्वादविघ्नसर्वेच्छारूपत्वाद्वा एषः। सूक्ष्मज्ञानविषयत्वादतिसूक्ष्मपरिमाणत्वाद्वा अणिमा। 'इदं सर्वं' जगत् 'ऐतदात्म्यं' एतत् सत् आत्मा स्वामी यस्य तत्तथोक्तम्। यद्वा—एष चासावात्मा च तदात्मा विचित्रा हि तद्धितगतिरिति वचनात्, तस्येदमित्यर्थे ष्यञ्प्रत्ययः तद्वशमित्यर्थः। ततत्वात् तत् परमानन्दत्वतः साधुस्वरूपत्वाद्वा सत्यं साधनात् सः पूर्णगुणत्वादात्मा। तत्त्वं अतत् त्वमिति च पदच्छेदः। तथाच त्वं 'तत्त्वं' तत्त्वतः 'अतदसि' तस्मादन्योऽसीति छन्दोगश्रुत्यर्थः। अनेनोद्दालकेन श्वेतकेतुं प्रति परतत्त्वस्य 'असकृत्' नवकृत्वः 'उपदेशादुपदिष्टत्वात् ज्ञानार्थं श्रवणादीनामावृत्तिः एव कर्तव्या। श्रवणादेः सकृदेव कर्तव्यत्वे किमर्थमसावसकृदुपदिशेदिति भाव इति सूत्रार्थ उक्तो भवति।

(३) हेत्वन्तरेण श्रवणाद्यावृत्तिं साधयत्सूत्रं पठित्वा व्याचष्टे—लिङ्गाच्चेति॥ आदिशब्देन 'अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति' (तै. ३-२.) इत्यादिकं गृह्यते। 'स तपः' इत्यतः प्रागपि 'तस्मा एतत्प्रोवाच। अन्नं प्राणं चक्षुश्श्रोत्रं मनो वाचमिति। तꣳहोवाच। यतो वा इमानि भूतानि जायन्ते' (तै. ३-१.) इत्यादिकमप्युदाहरणीयम्। इत्थं हि तैत्तिरीये आख्यायिका—वरुणपुत्रो भृगुः ब्रह्माध्यापयेति पितरमुपसादितवान्। अथ वरुणस्तस्मै भृगवे अन्नमयादिरूपाष्टक-

'स तपोऽतप्यत . . पुनरेव वरुणं पितरमुपससार'

(तै. ३-१.२.) इत्याद्यावर्तनलिङ्गाच्च ।

नित्यशः श्रवणं चैव मननं ध्यानमेव च ।

कर्तव्यमेव पुरुषैर्ब्रह्मदर्शनमिच्छुभिः ॥

इति बृहत्तन्त्रे ॥ २ ॥

॥ इत्यावृत्त्यधिकरणम् ॥ १ ॥

---

मुपदिदेश। तेषां जगज्जन्मादिकारणत्वादिलक्षणान्यप्युवाच। एवं श्रुतान्नादिरूपो भृगुः पुनःपुनस्तद्विषय एवापृच्छत्। तथैव वरुणोऽप्युपदिदेश। एवमुपदिष्टस्स भृगुः 'तपः' आलोचनं 'अतप्यत' अकरोत्। स तपस्तप्त्वा अन्नमयाख्यमनिरुद्धरूपं जगज्जन्मादिकर्तृत्वलक्षणवत्तया साक्षात्कृतवान्। स भृगुरेकरूपं साक्षात्कृत्य द्वितीयमपि साक्षात्कर्तुं गुर्वनुग्रहार्थं पुनरेव वरुणं पितरं 'उपससार' उपसादितवान्। हे 'भगवो' भगवन् प्राणमयाख्यं ब्रह्म साक्षात्कर्तुमिति शेषः। 'अधीहि' अनुज्ञां देहि अनुजानीहीति वाच्ये विनयप्रदर्शनायैवमुक्तिः। एवं भृगुणोक्तो वरुण उवाच। किमिति? 'तपसा' ज्ञानानुसन्धानरूपालोचनेन ब्रह्म विजिज्ञासस्व 'तपो ब्रह्म' ज्ञानरूपं ब्रह्मेति तपसो ब्रह्मज्ञानहेतुत्वात्तपो ब्रह्मेत्यभेदोपचार इति ग्रन्थान्तरे। इत्याद्यावर्तनलिङ्गादिति। एवमादिवाक्यबोध्यं यदनुज्ञाप्रार्थनाऽऽवर्तनादिरूपं श्रवणावर्तनलिङ्गं तस्मादित्यर्थः। चशब्दो न केवलं उपदेशाख्यगुरुव्यापाराद्धेतोरावृत्तेः कर्तव्यतासिद्धिः, किन्तु श्रुतस्य पुनरालोचनेनापरोक्षितत्वरूपशिष्यव्यापाराख्यलिङ्गदर्शनादपीति हेतुसमुच्चये। लिङ्गाच्चेत्यस्यावृत्तिः कर्तव्येति पूर्वेणान्वयः। अस्य श्रवणादित्रितयावृत्तिसाधकत्वाद्योगविभागः। यद्यपि श्रौतलिङ्गदर्शनबलान्मनननिदिध्यासनयोरेवावृत्तिः सिद्ध्यति, न श्रवणादीनां त्रयाणाम्। तथापि श्रुतान्नमयादीनां जगज्जन्मादिकारणत्वेन यद्ब्रह्मत्वं प्रागुक्तम्, तस्य 'तपो ब्रह्म' इत्यनेन सर्वत्र तद्घटकसार्वज्ञ्योक्तयोपपादनस्य श्रवणाद्यावर्तने लिङ्गत्वं सम्भवत्येव। न चान्नमयरूपे तपश्शब्दोक्तसार्वज्ञेन ब्रह्मत्वानुपपादनात्कथमेतदष्टरूपाणां श्रवणाद्यावर्तनलिङ्गत्वमिति वाच्यम्। तत्रालिङ्गत्वेऽपि तदितररूपेषु लिङ्गत्वसम्भवेन ब्रह्मविषयकश्रवणाद्यावृत्तावस्य लिङ्गत्वाविरोधात्। न च भृगु-

॥ २. आत्माधिकरणम् ॥

## (१) सू—ॐ ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ॐ ॥ ३ ॥

आत्मेत्युपदेश उपासनं च मोक्षार्थिभिः सर्वथा कार्यमेव। 'नान्यं विचिन्तय आत्मानमेवाहं विजानीयामात्मानमुपास

---

कर्तृकश्रवणादेरेकरूपविषयत्वाभावात्कथमियमावृत्तिरिति वाच्यम्। एकैक-रूपविषयेऽपि सामान्यविशेषाभ्यां द्विश्श्रवणादिप्राप्तेः।

॥ इत्यावृत्त्यधिकरणम् ॥ १ ॥

॥ २. आत्माधिकरणम् ॥

(१) अत्राधिकरणे आत्मत्वोपास्तेर्नित्यशः कार्यत्वं समर्थ्यते। आत्मत्वं न सर्वथा सदोपास्यमिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—आत्मेति ॥ अत्रात्मशब्दः प्रकारार्थः, इतिशब्दश्चावर्तते। तत्राद्यो रूढ्या विष्णुपरः। द्वितीयः आदत्ते स्वीयतयाभृत्यानिति स्वामिवाची। उपदेशः उपासनं च कार्यमिति शेषः इति भावेनात्मेति प्रतिज्ञांशं 'आत्मेप्युपासनम्' इति स्मृत्यनुसारेण व्याचष्टे—आत्मेति। सूत्र इवात्राप्यात्मेत्यावर्तते। तत्रैको रूढोऽन्यः स्वामिवचनः। उपदेशश्चेति चशब्दान्वयः। न केवलं तथोपासन-मावश्यकं किन्तु तथोपदेशश्च कार्य इति चशब्दार्थः। मोक्षार्थिभिरिति सौत्रतुशब्दस्यार्थान्तरोक्तिः। अनेनात्मत्वोपास्तेरवश्यकर्तव्यत्वे तस्या एव मोक्षसाधनत्वात् तां विना मोक्षासिद्धेरिति हेतुरुक्तो भवति—सर्वथेति। सर्वप्रकारविघ्नेऽपि सदा कार्यमित्यर्थः। तुशब्दस्यार्थः—एवेति, न त्वकार्य-मित्येवकारार्थः। कुतः सर्वथा कार्यत्वमित्यतो हेत्वन्तरप्रतिपादनाय प्रवृत्तं आत्मेत्युपगच्छन्ति ग्राहयन्ति चेत्यंशं श्रुत्युदाहरणपूर्वकं व्याचष्टे—नेति। इतीति। इति श्रुत्येत्यर्थः। 'हि' यतः। उपगच्छन्तीति। उपासते गुरूपदेशेन जानन्ति चेत्यर्थः। उक्तं हि सुधायां उपगच्छन्तीत्येतत् ज्ञानार्थं उपासनार्थं चेति। अत एव श्रुतौ विजानीयामुपास इत्युभयोक्तिः। सन्त इति सिद्धमिति च शेषः। तथाच 'हि' यतो 'न' इति श्रुत्या सन्त आत्मेत्युपगच्छन्तीति सिद्धम्, आत्मत्वस्योपास्यत्वं सिद्धमिति यावत्।

आत्मा हि ममैष भवति' (        ) इति ह्युपगच्छन्ति ।
'आत्मेत्येवोपास्व आत्मेत्येव विजानीहि नान्यं किञ्चन विजानथ
आत्मा ह्येवैष भवति' (        ) इति ग्राहयन्ति च ।

(२) आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः ।
नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत् ॥
इति भविष्यत्पर्वणि ।

(३) आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः ।

---

अतो मोक्षार्थिभिरात्मा विष्णुरात्मा स्वामीत्युपासनं सर्वथा कार्यमेवेति योजना। श्रुत्यर्थस्तु—अहं परमात्मनोऽयं न विचिन्तये। परमात्मानमेवात्मेति विजानीयाम् । परमात्मानमेवात्मेत्युपासे.। न चैतदविद्यमानोपासनमित्याह—आत्मेति। 'एषः' विष्णुः 'मम' उपासकस्यात्मा स्वामीति हि यतः प्रसिद्ध इति। एवमरे शिष्य आत्मा स्वामीत्येवोपास्व, आत्मेत्येव विजानीहि, विष्णोरन्यं नात्मेति 'विजानथ' विजानीथाः। न चायं मिथ्योपासनोपदेशः, 'हि' यतः 'एषः' विष्णुः आत्मा स्वामी भवति खल्विति। अत्रापीत्यनन्तरं श्रुत्येति ग्राहयन्ति चेत्यनन्तरं इति सिद्धमिति च शेषः। योजना तु पूर्ववदेव। ग्राहयन्तीत्यस्योपदिशन्तीत्यर्थः। सन्तः शिष्यानिति शेषः। चशब्द उपदिशन्तिग्राहयन्त्योः समुच्चये, तुशब्दसूचितहेतुसमुच्चये चेति ध्येयम्।

(२) यदात्मत्वोपासनस्य मोक्षसाधनत्वं तुशब्दार्थत्वेनोक्तं मोक्षार्थिभिरित्यनेन, तत् कुतो ज्ञायत इत्यत आह—आत्मेति॥ 'आत्मा' स्वामीत्युपासनं 'सर्वथा' सर्वप्रकारेण यावच्छक्ति सदा कार्यमेव। 'एतावत्' आत्मत्वमात्रं वा न विस्मरेदित्यर्थः। भविष्यत्पर्वणीत्यस्योक्तत्वादिति शेषेणात्मेति प्रतिज्ञावाक्येनान्वयः।

(३) केचित्तु—विष्णुरात्मतया जीवत्वेनोपास्यः। कुतः? यतः 'अहं ब्रह्मास्मि' इत्युपगच्छन्ति 'तत्त्वमसि' इत्यादिना ग्राहयन्ति च शिष्यानित्यहंग्रहे प्रत्यगर्थस्य जीवात्मत्वग्रहणमेतदधिकरणप्रतिपाद्यतया वर्णयन्ति। तदयुक्तमिति भावेनाह—आत्मेति। कर्तव्यमिति विपरिणामेनाकृष्यते। तथाच विष्णुः 'आत्मा' स्वामीति ध्यानं कर्तव्यम्। कथम्? 'विशेषण-

सर्वेषां च मुमुक्षूणामुपदेशश्च तादृशः ॥
कर्तव्यो नास्य हानेन कस्य चिन्मोक्ष इष्यते ॥
इति ब्राह्मे ॥ ३ ॥

॥ इत्यात्माधिकरणम् ॥ २ ॥

॥ ३. नप्रतीकाधिकरणम् ॥

## (१) सू—ॐ ॥ न प्रतीके न हि सः ॥ ॐ ॥ ४ ॥

'नाम ब्रह्मेत्युपासीत' (छा. ७-१-५.) इत्यादिना शब्दभ्रान्त्या

---

विशेष्यतः' भावप्रधानः सावधारणश्च। मुमुक्षूणामिति तृतीयार्थे षष्ठी। तथाच सर्वैरपि मुमुक्षुभिर्विष्णुरात्मा स्वामीति विशेषणविशेष्यभावेनैव ध्यानं कर्तव्यम्। न तु विष्णोर्जीवात्मत्वविधानेन। न केवलं ध्यानं, किन्तु तादृशः आत्मा विष्णुरिति विशेषणविशेष्यभावोपेत उपदेशश्च कर्तव्यः। 'अस्य' आत्मत्वस्योपासनस्य 'हानेन' त्यागेनास्याकरणे कस्यापि मोक्षो नेतीष्यते प्रामाणिकैरिति स्मृत्यर्थः। ब्राह्म इत्यनन्तरं अर्थान्तरं दूषितमिति वाक्यशेषः।

॥ इत्यात्माधिकरणम् ॥ २ ॥

॥ ३. नप्रतीकाधिकरणम् ॥

(१) अत्राधिकरणे ब्रह्मज्ञानार्थिनो विष्णुप्रतीकैक्योपासनवर्जनमावश्यकमिति प्रतिपाद्यते। 'नाम ब्रह्म' इति श्रुतेर्भगवत्प्रतिमारूप नामवागादिकं ब्रह्मतयोपास्यमिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—नेति ॥ अत्र प्रतीक इति विषयसप्तमी। सुधोक्तरीत्या पूर्वसूत्रादात्मेतीति पदद्वयमुत्तरसूत्राद्दृष्टिपदं च, यद्वा—उत्तरसूत्राद्ब्रह्मदृष्टिपदमेवात्र सम्बध्यत इति भावेन न प्रतीक इति प्रतिज्ञांशं कर्तव्येति पदाध्याहारेण व्याचष्टे—नाम ब्रह्मेत्युपास्त इत्यादिनेति। आदिशब्देन 'वाचं ब्रह्मेत्युपास्ते' इत्यादीनि गृह्यन्ते। जातयेति शेषः। कर्तव्येत्यनन्तरमितीत्यनुवर्तते। तथाच इत्यादिना वाक्येनैकविभक्तिकत्वरूपसामानाधिकरण्यबलेन जातया अस्मिन् वाक्ये ऐक्योपासनं विधीयत इति शब्दविषयभ्रान्त्या मूलभूतया 'प्रतीके' नामवाङ्मनः-

नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥

॥ इत्यनावृत्त्यधिकरणम् ॥ ११ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रभाष्ये
चतुर्थाध्यायस्य चतुर्थः पादः
॥ चतुर्थाध्यायस्समाप्तः ॥
॥ ॐ ॥
॥ श्रीमद्ब्रह्मसूत्रभाष्यं सम्पूर्णम् ॥

---

यथोक्तम्—

मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ॥ इति ॥

अतः परमाप्ततमप्रणीतत्वादिदं भाष्यं सकलैस्सुजनैरादरेणाङ्गीकार्यमिति भावः॥

॥ इत्यनावृत्त्यधिकरणम् ॥ ११ ॥

भाष्यान्ते 'नित्यानन्द' इति श्लोकान्तरं क्वचित्पठ्यते। तस्येत्थं गमनिका—भक्त्यतिशयात्पौनःपुन्येन प्रीतिप्रार्थनपूर्वकं विष्णुं नमति—नित्येति। नित्यानन्दो देशकालगुणैः 'पूर्णः' अपरिच्छिन्नो हरिः 'नित्यदा' सर्वदा मम प्रीयताम्। तस्मै विष्णवे मम नमश्चास्त्वित्यन्वयः ॥

कुशाग्रबोधैर्जयतीर्थपादैः कृतामहं व्याकृषि सूत्रभाष्यम्।
टीकां तथाऽऽर्योरुवचोऽनुसृत्य ततोऽनुवक्तुर्न भवेन्ममागः॥
मन्मानसाम्बुजस्थेन हरिणा कृतयाऽञ्जसा।
भाष्यदीपिकया कृष्णः प्रीयतां कमलाकरः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण
श्रीमज्जगन्नाथयतिना कृतायां
श्रीमद्ब्रह्मसूत्रभाष्यदीपिकायां
चतुर्थाध्यायस्य चतुर्थः पादः

॥ चतुर्थाध्यायस्समाप्तः ॥
॥ ॐ ॥
॥ श्रीमद्ब्रह्मसूत्रभाष्यदीपिका सम्पूर्णा ॥

॥ श्रीः ॥

श्रीजगन्नाथयतिकृता

# सूत्रदीपिका

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
लक्ष्मीहयग्रीवाय नमः ॥

## ॥ चतुर्थाध्यायस्य प्रथमः पादः ॥

### ॥ आवृत्त्यधिकरणम् ॥ १ ॥

(१) ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ ज्ञानार्थं श्रवणादीनामावृत्तिः कार्या । कुतः असकृदुपदेशात् बहुवारं श्वेतकेतुं प्रति उद्दालकेन परतत्त्वस्योपदिष्टत्वादित्यर्थः ॥ १ ॥

(२) ॐ लिङ्गाच्च ॐ ॥ भृगुणा श्रुतस्य पुनरालोचनेनापरोक्षितत्वरूप-लिङ्गदर्शनाच्चावृत्तिः कर्तव्येत्यर्थः ॥ २ ॥

### ॥ आत्माधिकरणम् ॥ २ ॥

(३) ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ॥ तुशब्द एवार्थे । आत्मा विष्णुः । आत्मेति मम स्वामीति । उपास्य एव । कुतः यस्माज्ज्ञानिनः तथोपगच्छन्ति जानन्ति उपासते च शिष्यान्प्रति ग्राहयन्ति उपदिशन्ति च । तस्मादित्यर्थः ॥ १ ॥

### ॥ न प्रतीकाधिकरणम् ॥ ३ ॥

(४) ॐ न प्रतीके न हि सः ॐ ॥ प्रतीके नामाद्यधिष्ठानविषये । आत्मेत्युपास्तिर्न कार्या । किन्तु तद्गततया । कुतः स विष्णुः । हि यस्मात् । नामादिप्रतीकं न भवति तस्मादित्यर्थः ॥ १ ॥

॥ ब्रह्माधिकरणम् ॥ ४ ॥

(५) ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ ब्रह्मणि परमेश्वरे । ब्रह्मदृष्टिः पूर्णत्वोपास्तिः कार्या । कुतः उत्कर्षात् । पूर्णत्वस्योत्कृष्टतया तथोपास्तेरप्युत्कृष्टत्वादित्यर्थः ॥ १ ॥

॥ आदित्याधिकरणम् ॥ ५ ॥

(६) ॐ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॐ ॥ अङ्गे भगवदङ्गे । आदित्यादिभिर्देवैः आदित्यादिमतयः आदित्याद्याश्रयाङ्गत्वोपासना कार्या । कुतः उपपत्तेः तेषां तत्प्रवेशस्यापेक्षितत्वेन तथोपासनस्य युक्तत्वादित्यर्थः ॥ १ ॥

॥ आसीनाधिकरणम् ॥ ६ ॥

(७) ॐ आसीनः सम्भवात् ॐ ॥ जिज्ञासुरासीनः आसने उपविशन्नेव उपासनं कुर्यात् । कुतः सम्भवात् तस्यासने सत्येव युक्तत्वादित्यर्थः । ॥ १ ॥

(८) ॐ ध्यानाच्च ॐ ॥ अविच्छिन्नस्मृतिरूपोपासनस्यैव ध्यानत्वात् तदपेक्षयैवासननियमाभ्युपगमान्न स्मरणोपासनमादाय व्यभिचार इत्यर्थः ॥२॥

(९) ॐ अचलत्वञ्चापेक्ष्य ॐ ॥ न केवलं प्रत्याहारादिना मनोविक्षेपाभावो भवति । किन्त्वचलत्वं चापेक्ष्य शरीराचलत्वं चापेक्ष्य । अतस्तदर्थं आसीन एव ध्यायेदित्यर्थः ॥ ३ ॥

(१०) ॐ स्मरन्ति च ॐ ॥ स्मृतिकर्तारः कृष्णादयः । आसननियममावश्यकमित्येतमर्थं "समं कायशिरोग्रीवम्" इति (गीता. ६-१३) स्मरन्तीत्यर्थः ॥ ४ ॥

(११) ॐ यत्रैकाग्रता तत्राविशेषात् ॐ ॥ यत्र यस्मिन् देशे काले । आसने च एकाग्रता ध्यानस्यैकनिष्ठता भवति । तत्रैव तस्मिन्देशे

काले आसन एव ध्यानं कुर्यात् । कुतः अविशेषात् देशकालादिना ध्यानज्ञानयोर्विशेषाभावादित्यर्थः ॥ ५ ॥

॥ आप्रायणाधिकरणम् ॥ ७ ॥

(१२) ॐ **आ प्रायणात्तत्रापि हि दृष्टम्** ॐ ॥ मुमुक्षुणा आ प्रायणात् मोक्षपर्यन्तम् । ध्यानं कर्तव्यमेव । कुतः हि यस्मात् । तत्रापि मोक्षेऽपि । दृष्टं ध्यानं श्रुतं स्मृतञ्च । तस्मादित्यर्थः ॥ १ ॥

॥ तदधिगमाधिकरणम् ॥ ८ ॥

(१३) ॐ **तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्** ॐ ॥ तदधिगमे तस्य ब्रह्मणः अधिगमे अपरोक्षज्ञाने सति । उत्तरपूर्वाघयोः अपरोक्षज्ञानोत्तरपूर्वकालीनाघयोः । अश्लेषविनाशौ उत्तरस्याश्लेषः पूर्वस्य विनाशश्च । भवतीति ज्ञायते । कुतः तद्व्यपदेशात् तयोः अश्लेषविनाशयोः "तद्यथा" इति (छां.४-१४-३.) श्रुतावुक्तत्वादित्यर्थः ॥१॥

(१४) ॐ **इतरस्याप्येवमसंश्लेषः पाते तु** ॐ ॥ तुशब्दोऽनुत्थानवाची । इतरस्य भगवज्ज्ञानीतरद्वेषिणः । पाते तु अनुत्थानतमःपाते प्रत्यासन्ने । तदर्थमितरस्य पापेतरपुण्यस्यापि एवं ज्ञानिपापवत् । असंश्लेषः उत्तरस्यासंश्लेषः पूर्वस्य विनाशश्च भवतीत्यर्थः ॥ २ ॥

(१५) ॐ **अनारब्धकार्ये एव तु पूर्वे तदवधेः** ॐ ॥ तुशब्दश्चार्थः । पूर्वे विष्णुद्रेषज्ञानपूर्वकालीने । अनारब्धकार्ये एव अप्रारब्धकार्ये एव पुण्यपापे विनश्यतः । कुतः तदवधेः तस्य मोक्षस्य प्रारब्धकर्मनिवृत्त्यवधित्वश्रुतेः स्मृतेश्चेत्यर्थः ॥ ३ ॥

(१६) ॐ **अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्** ॐ ॥ तुशब्दो विशेषद्योतकः । अग्निहोत्रादि जिज्ञासुब्रह्मज्ञानिकृताग्निहोत्राद्यकाम्यकर्म । तत्कार्यायैव ज्ञानमोक्षोभयकार्यायैव भवति । कुतः तद्दर्शनात् तथा "न हास्य" इति (बृ. ३-४-१५.) श्रुतावुक्तत्वादित्यर्थः ॥ ४ ॥

(१७) ॐ **अतोऽन्यदपीत्येकेषामुभयोः** ॐ ॥ अतः प्रारब्धाकाम्यकर्मणः । अन्यत् भिन्नं ज्ञानात्पूर्वोत्तरकाम्यं पुण्यं अनिष्टं अप्रारब्धञ्च विनाशाश्लेषौ प्राप्नोति । कुतः यत इत्येवं प्रकारेणैकेषां शाखिनां शाखासूभयोर्ज्ञानोत्तरपूर्वयोः अप्रारब्धानभीष्टयोः काम्यपुण्ययोः परित्यागेन पाठोऽस्ति । अत इत्यर्थः ॥ ५ ॥

(१८) ॐ **यदेव विद्ययेति हि** ॐ ॥ ज्ञानिकृतमल्पमपि पुण्यमक्षयफलं भवति । कुतः हि यस्मात् । " यदेव विद्यया " (छां. १-१-१०) इति श्रुतिरस्ति । अत इत्यर्थः ॥ ६ ॥

(१९) ॐ **भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते** ॐ ॥ तुशब्दो ज्ञानिनः प्रारब्धभोगोपमर्दरूपविशेषद्योतकः । ज्ञानी भोगेन भोगानुभवेन । इतरे प्रारब्धपुण्यपापे । क्षपयित्वा विनाश्य । अथ अनन्तरम् । नियमेन सम्पत्स्यते ब्रह्म प्राप्नोति । एवं ब्रह्मविद् तमः प्राप्नोतीत्यर्थः ॥ ७ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥**

**॥ ॐ ॥**

॥ श्रीः ॥

# ॥ चतुर्थाध्यायस्य द्वितीयः पादः ॥

## ॥ वाङ्मनसाधिकरणम् ॥ १ ॥

(१) **ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ**॥ वाक् वागभिमानिन्युमापद्गृहीता वारुणी सौपर्णी च । मनसि मनोऽभिमानिरुद्रशब्दितशेषे गरुडे च विलीयते। कुतः वाचो मनोऽधीनत्वादिति शेषः। तत्कथम्। दर्शनात् तस्य प्रत्यक्षसिद्धत्वात्। किञ्च शब्दाच्च तथा श्रुतेश्चेत्यर्थः ॥ १ ॥

(२) **ॐ अत एव च सर्वाण्यनु ॐ** ॥ चशब्दोऽप्यर्थः। सर्वाणि दैवतान्यपि। अनु यथाऽनुकूलम्। स्वस्वयोग्येषु देवेषु लीयन्ते। कुतः अत एव "अग्नौ" इति (गौपवन) श्रुतेरेवेत्यर्थः ॥ २ ॥

## ॥ मनःप्राणाधिकरणम् ॥ २ ॥

(३) **ॐ तन्मनः प्राण उत्तरात् ॐ** ॥ तन्मनः पूर्वोक्तमनोऽभिमानी शेषः सुपर्णश्च। प्राणे तच्छब्दितचतुर्मुखे। लीयते। कुतः उत्तरात् "मनः प्राणे" (छां. ६-१५-१) इत्युत्तरवाक्यादित्यर्थः ॥ १ ॥

## ॥ अध्यक्षाधिकरणम् ॥ ३ ॥

(४) **ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ** ॥ सः चतुर्मुखः अध्यक्षे अधिपतौ परमात्मनि लीयते। कुतः तदुपगमादिभ्यः परमात्मप्राप्त्यादिप्रतिपादकेभ्यः "सर्वे" इत्यादिश्रुत्यादिभ्यः इत्यर्थः ॥ १ ॥

## ॥ भूताधिकरणम् ॥ ४ ॥

(५) **ॐ भूतेषु तच्छ्रुतेः ॐ** ॥ विशिष्योक्तेभ्योऽन्येभ्यो देवाः। भूतेषु पञ्चभूतेषु। लीयन्ते। कुतः तच्छ्रुतेः "भूतेषु देवाः" इति (बृहत्) श्रुतेश्चेत्यर्थः ॥ १ ॥

## ॥ नैकस्मिन्नधिकरणम् ॥ ५ ॥

(६) ॐ **नैकस्मिन् दर्शयतो हि** ॐ॥ नैकस्मिन् अग्नावेव सर्वे देवा न लीयन्ते। किन्तु यथायोगं सर्वभूतेषु । कुतः हि यस्मात् दर्शयतः " पृथिव्यामृभवः" इति "ऋभवः पृथिव्यामिति" महोपनिषच्चतुर्वेदशिखे च तथा प्रतिपादयतः । तस्मादित्यर्थः ॥ १ ॥

## ॥ समनाधिकरणम् ॥ ६ ॥

(७) ॐ **समना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य** ॐ ॥ आद्यश्चो नञः समाकर्षणार्थः । " द्वौवावेति " श्रुतिसमुच्चयो द्वितीयः । तथाच लक्ष्मीर्न लीयते । कुतः यतस्तस्याः अनुपोष्य परमात्मानमनुपास्यैव । अमृतत्वं नित्यमुक्तत्वम् । तत्कुतः । असृत्युपक्रमात् कदाऽपि संसारोपक्रमाभावात् । सोऽपि कुतः यतः समना देशतः कालतः समो ना परमपुरुषो यस्याः सा समना तस्मादित्यर्थः ॥ १ ॥

(८) ॐ **तदपीतेः संसारव्यपदेशात्** ॐ ॥ तस्यां प्रकृतौ । अपीतेः लयस्य । संसारव्यपदेशात् " विलीनो " इति (सौपर्ण) संसारहेतुत्वश्रुतेः न मोचकेश्वरसाम्यं प्रकृतेरित्यर्थः ॥ २ ॥

(९) ॐ **सूक्ष्मं प्रमाणतश्च तथोपलब्धेः** ॐ ॥ प्रकृतेरपि सूक्ष्मं ब्रह्म प्रमाणतः ज्ञानानन्दादिगुणपरिमाणतश्चाधिकम् । कुतः तथोपलब्धेः " सर्वतः " इति (तुरश्रु.) तथा श्रुतेः । अतोऽपि प्रकृतेः न ब्रह्म साम्यमित्यर्थः ॥३॥

(१०) ॐ **नोपमर्देनातः** ॐ ॥ अतः साम्यतदभावयोः साधितत्वात् । नोपमर्देन स्वातन्त्र्यादिगुणाबाधेन । प्रकृतेः परमात्मना नित्यमुक्तत्वादिनैवसाम्यमित्यर्थः ॥ ४ ॥

(११) ॐ **अस्यैव चोपपत्तेरूष्मा** ॐ ॥ ऊष्मावत्वानूष्मावत्वप्रतिपादिका "द्विधा हीदम्" इति (सौपर्ण) श्रुतिरप्यस्यैव किञ्चित्साम्यरूपार्थस्यैवोपपत्तेर्घटनायोपपादिका भवतीत्यर्थः ॥ ५ ॥

(१२) ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ ॥ प्रतिषेधात् ईश्वरस्यान्यसाम्यप्रतिषेधात् । प्रकृतेर्देशकालव्याप्त्यादिनापि परमात्मसाम्यं नेति चेन्न । कुतः यतः शारीरात् जीवेनैवेश्वरस्य साम्यं प्रतिषिध्यते न प्रकृतितः । अत इत्यर्थः ॥ ६ ॥

(१३) ॐ स्पष्टो ह्येकेषाम् ॐ ॥ हि यस्मात् । एकेषां शाखासु प्रकृतेः अथेति (माध्यन्दिन श्रु.) समाऽसमत्ववादः स्पष्टोऽस्ति तस्मादित्यर्थः ॥ ७ ॥

(१४) ॐ स्मर्यते च ॐ ॥ कृष्णादिभिरुक्तार्थे मत्स्य इति (वाराहे) स्मर्यते-चेत्यर्थः ॥ ८ ॥

## ॥ पराधिकरणम् ॥ ७ ॥

(१५) ॐ तानि परे तथाह्याह ॐ ॥ तानि सर्वाणि दैवतानि चतुर्मुखद्वारा । परे परमात्मनि । लीयन्ते । कुतः हि यस्मात् तथाऽऽह सर्व इति (कौषारव) श्रुतिः तथाऽऽह तस्मादित्यर्थः ॥ १ ॥

## ॥ अविभागाधिकरणम् ॥ ८ ॥

(१६) ॐ अविभागो वचनात् ॐ ॥ भगवदिच्छातद्भक्तेच्छानाम् । अविभागो विषयैक्यम् । न तु विरोधः । कुतः वचनात् "एते देवाः" इति (गौपवन) श्रुतेरित्यर्थः ॥ १ ॥

## ॥ तदोकोऽधिकरणम् ॥ ९ ॥

(१७) ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॐ ॥ तस्मिन्नुत्क्रान्तिकाले । तदोकोऽग्रज्वलनं तस्य परमात्मनः ओकसः आश्रयभूतस्य हृदयस्याग्रे ज्वलनं भवति । अथ तत्प्रकाशितद्वारः तेन प्रकाशेन विद्योतितमार्गः सन् । देहाज्जीव उत्क्रामति । ननु कथमेतद्युज्यते । विद्यासामर्थ्यात् ज्ञानसामर्थ्यात् । तच्छेषगत्यनुस्मृतियोगाच्च विद्याङ्गप्राप्य-

स्मरणसाहित्याच्च । किञ्च हार्दानुगृहीतः हृदयस्थभगवदनुगृहीतः सन् याति । कया शताधिकया सुषुम्नानाड्येत्यर्थः ॥ १ ॥

(१८) ॐ रश्म्यनुसारी ॐ ॥ रश्म्यनुसारी अन्तःस्थितादित्यप्रकाशानुसारी सन् जीवो निष्क्रामतीत्यर्थः ॥ २ ॥

(१९) **ॐ निशि नेति चेन्न सम्बन्धात् ॐ** ॥ ननु निशि आदित्यरश्मीनामभावात् । ज्ञानिनः उत्क्रमणं । नेति चेन्न न स्यादिति चेन्न । कुतः सम्बन्धात् सूर्यरश्मीनां सर्वदा सम्बन्धादित्यर्थः ॥ ३ ॥

(२०) **ॐ यावद्देहभावित्वाद्दर्शयति च ॐ** ॥ यावद्देहभावित्वात् रश्मिसम्बन्धस्य यावच्छरीरभावित्वात् । रात्रावपि ज्ञानिनः उत्क्रमणं युक्तम् । कुतः दर्शयति चो यतः । दर्शयति " संसृष्टा " इति (माध्यन्दिनायन) श्रुतिः तथा प्रतिपादयति अत इत्यर्थः ॥ ४ ॥

(२१) **ॐ अतश्चायनेऽपि हि दक्षिणे ॐ** ॥ चशब्दः प्रतिज्ञाद्वयसमुच्चये । अपि दक्षिणे मरणादिति स्मृतिसत्त्वेऽपि । दक्षिणे अयने दक्षिणायनकाले । ज्ञानिनः उत्क्रान्तिर्युक्ता । कुतः अतः सौररश्मिसहस्रनाडीसम्बन्धस्य तदापि सत्वात् । हि यतः । एवं अतः दक्षिणायनदृष्टान्तेन रात्रावुत्क्रान्त्यभावो न वाच्य इत्यर्थः ॥ ५ ॥

## ॥ योग्यधिकरणम् ॥ १० ॥

(२२) **ॐ योगिनः प्रति स्मर्येते स्मार्ते चैते ॐ** ॥ चो यतः । एते ब्रह्मचन्द्रगती । योगिनः प्रति ज्ञानकर्मयोगिनः प्रति । स्मर्येते स्मृत्या उच्येते । स्मार्ते च स्वानुस्मृतिसाध्ये च । गतीत्यादिना (अध्यात्मे) स्मर्येते । अतस्तयोर्न केवलं कालादिकृतत्वमित्यर्थः ॥ १ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥**

॥ ॐ ॥

॥ श्रीः ॥

# ॥ चतुर्थाध्यायस्य तृतीयः पादः ॥

## ॥ अर्चिराद्यधिकरणम् ॥ १ ॥

(१) ॐ **अर्चिरादिना तत्प्रथितेः** ॐ ॥ उत्क्रान्तो ज्ञानी अर्चिरादिना मार्गेण गच्छति । कुतः तत्प्रथितेः तस्य "तेऽर्चिषमभिसम्भवन्ति" इति (छां. ५-१०-१.) श्रुतौ तस्यार्थस्य प्रसिद्धत्वादित्यर्थः ॥ १ ॥

## ॥ वायुशब्दाधिकरणम् ॥ २ ॥

(२) ॐ **वायुशब्दादविशेषविशेषाभ्याम्** ॐ ॥ अविशेषविशेषाभ्यां वायोः प्राप्यत्वश्रुतेः उभयपर्यालोचनया वायोः द्वितीयप्राप्यत्वमेवेत्यर्थः ॥१॥

## ॥ तटिदधिकरणम् ॥ ३ ॥

(३) ॐ **तटितोऽधि वरुणः सम्बन्धात्** ॐ ॥ तटितोऽधि तटित्प्राप्त्यनन्तरं वरुणः प्राप्यः । कुतः सम्बन्धात् वरुणस्य तटित उपरि सम्बन्धादित्यर्थः ॥ १ ॥

## ॥ आतिवाहिकाधिकरणम् ॥ ४ ॥

(४) ॐ **आतिवाहिकस्तल्लिङ्गात्** ॐ ॥ पूर्वं द्वितीयप्राप्यत्वेनोक्तो वायुरातिवाहिक एव न मुख्यः । कुतः तल्लिङ्गात् । पूर्वप्राप्यत्ववायुशब्दात् । अर्चिषः स इति रूपतद्धर्मादेरित्यर्थः ॥ १ ॥

(५) ॐ **उभयव्यामोहात्तत्सिद्धेः** ॐ ॥ सप्तम्यर्थे पञ्चमी । उभयव्यामोहात् पूर्वोक्तवायुरातिवाहिको मुख्यो वा उत्तरोक्तवायुरातिवाहिको मुख्यो वेति सन्देहे । तत्सिद्धेः तेन दिवस्पतित्वविशेषणेन तस्य उत्तरोक्तस्य वायोर्मुख्यत्वसिद्धेर्नानिर्णय इत्यर्थः ॥ २ ॥

## ॥ वैद्युताधिकरणम् ॥ ५ ॥

(६) ॐ **वैद्युतेनैव ततस्तच्छ्रुतेः** ॐ ॥ ज्ञानी वैद्युतेनैव विद्युत्पतिना

वायुनैव ब्रह्म गच्छति । न तु मध्ये ततः वायोरन्यः प्राप्योऽस्ति । कुतः तच्छ्रुतेः तस्य वायोरेव " स एनान् ब्रह्म गमयतीति " (छां. ४-१५-६.) ब्रह्मगमयितृत्वश्रुतेरित्यर्थः ॥ १ ॥

## ॥ कार्याधिकरणम् ॥ ६ ॥

(७) ॐ **कार्यं बादरिरस्य गत्युपपत्तेः** ॐ ॥ कार्यं उत्पत्तिमच्चतुर्मुखाख्यं ब्रह्म । वायुर्गमयतीति स इति श्रुत्यर्थ इति बादरिराचार्यो मन्यते । कुतः अस्य चतुर्मुखस्यैव । गत्युपपत्तेः प्राप्यत्वोपपत्तेरित्यर्थः ॥ १ ॥

(८) ॐ **विशेषितत्वाच्च** ॐ ॥ यदीति (कौषारव) श्रुतौ प्राप्तव्यब्रह्मण-श्चतुर्मुखपदेन विशेषितत्वाच्चोक्तं युक्तमित्यर्थः ॥ २ ॥

(९) ॐ **सामीप्यात्तु तद्व्यपदेशः** ॐ ॥ यतस्तद्व्यपदेशः " ब्रह्मवित् " इति (तै. २-१.) परब्रह्मप्राप्तिश्रुतिः । सामीप्यात् चतुर्मुखं प्राप्याचिरेण परं प्राप्नोतीति कालसामीप्यादेव । तदनुसृत्यैव प्रवर्तते । अतो न तद्विरोध इत्यर्थः ॥ ३ ॥

(१०) ॐ **कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्** ॐ ॥ कार्यात्यये महाप्रलये । तदध्यक्षेण सह कार्यस्वामिना चतुर्मुखेन सह । अतः चतुर्मुखात् । परं उत्तमं ब्रह्म । ज्ञानी गच्छति । अभिधानात् तथा श्रुतेरित्यर्थः ॥ ४ ॥

(११) ॐ **स्मृतेश्च** ॐ ॥ ब्रह्मणेति स्मृतेर्विद्यमानत्वाच्च ज्ञानी चतुर्मुखेन सह परं प्राप्नोतीति सिध्यतीत्यर्थः ॥ ५ ॥

(१२) ॐ **परं जैमिनिर्मुख्यत्वात्** ॐ ॥ ज्ञानी परं ब्रह्मैव प्राप्नोति । न तु कार्यब्रह्म । कुतः मुख्यत्वात् ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वादिति जैमिनिराचार्यो मन्यत इत्यर्थः ॥ ६ ॥

(१३) ॐ **दर्शनाच्च** ॐ ॥ ज्ञानी परं ब्रह्मैव गच्छति । कुतः तेन श्रवणादिभिः परब्रह्मण एव दृष्टत्वादित्यर्थः ॥ ७ ॥

(१४) ॐ न च कार्ये प्रतिपत्त्यभिसन्धिः ॐ ॥ इतोऽपि ज्ञानिनः कार्यब्रह्मप्राप्तिरनुपपन्ना । कुतः चो यतः । कार्ये ब्रह्मणि विषये ज्ञानिनः प्रतिपत्त्यभिसन्धिः प्रतिपत्तिः उपास्तिः । अभिसन्धिः प्राप्नुवानीतीच्छा नास्ति । अत इत्यर्थः ॥ ८ ॥

(१५) ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ॥ वायुरप्रतीकालम्बनान् व्यामोपासकानधिकारिणः नयति परं ब्रह्म गमयति । अन्यान् प्रतीकालम्बनान् प्रतीकशब्दितदेहान्त उपासकान् कार्यब्रह्म नयतीति "स एनान्" इति (छां. ४-१५-६.) श्रुत्यर्थ इति बादरायणाचार्यो मन्यते । कुतः उभयथा च दोषात् । एतां व्यवस्थामनङ्गीकृत्य सर्वेषां एकैकप्राप्त्यङ्गीकारे कार्यब्रह्मपरब्रह्मप्राप्त्यङ्गीकारे कार्यब्रह्मपरब्रह्मप्राप्तिपक्षद्वयोक्तदोषप्रसङ्गः । ननु यत्प्राप्तुमभिवाञ्छति तत्प्राप्नोतीति (पाद्म) वचनात्तत्तदिच्छामात्रेण तत्तत्प्राप्तिसम्भवान्नोक्तव्यवस्थाङ्गीकार्येत्यत आह । तत्क्रतुश्चेति । अनेन स यथा कामो भवति तत्क्रतुर्भवतीत्यादि (बृ. ६-४-५.) श्रुतिर्गृह्यते । चशब्दो यत इत्यर्थे । यतः स यथेति श्रुतिस्तत्तत्प्राप्तीच्छामात्रेण तत्तत्प्राप्तिं प्रतिषिध्य तज्ज्ञानोपासनापरोक्षैरेव तत्प्राप्तिं वक्ति । अतस्तत्तदिच्छामात्रेणैव न तत्प्राप्तिर्युज्यते इत्यर्थः ॥ ९ ॥

(१६) ॐ विशेषं च दर्शयति ॐ ॥ चो यतः । अन्तः प्रकाशा इति (चतुर्वेदशि०) श्रुतिः केचनाप्रतीकालम्बनाः केचन प्रतीकालम्बना इति विशेषं भेदं दर्शयति प्रतिपादयति । तस्माच्चोक्तं युक्तमित्यर्थः ॥ १० ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥**

॥ ॐ ॥

॥ श्रीः ॥

# ॥ चतुर्थाध्यायस्य चतुर्थः पादः ॥

## ॥ सम्पद्याधिकरणम् ॥ १ ॥

(१) ॐ **सम्पद्याविहाय स्वेन शब्दात्** ॐ ॥ ज्ञानी सम्पद्य ब्रह्म प्राप्य। अविहाय ब्रह्मानतिक्रम्य। स्वेन आविर्भूतस्वरूपेणावस्थितः सन् भोगान्भुङ्क्ते। कुतः शब्दात् "स एवं वित्" इति (सौपर्ण) श्रुतेरित्यर्थः ॥ १ ॥

## ॥ मुक्ताधिकरणम् ॥ २ ॥

(२) ॐ **मुक्तः प्रतिज्ञानात्** ॐ ॥ स तत्र पर्येतीति श्रुतौ मुक्त एवोच्यते। कुतः प्रतिज्ञानात् मुक्तादन्यस्य दिव्यभोगं प्रतिषिध्य "अहरहः" इति (बृहत्) श्रुतौ मुक्तस्यैव ब्रह्मप्राप्त्या दिव्यभोगोक्तेरित्यर्थः ॥१॥

## ॥ आत्माधिकरणम् ॥ ३ ॥

(३) ॐ **आत्मा प्रकरणात्** ॐ ॥ परंज्योतिःशब्देन आत्मा परमात्मैवोच्यते न सूर्यः। कुतः प्रकरणात् अस्य वाक्यस्य परमात्मप्रकरणत्वादित्यर्थः ॥ १ ॥

## ॥ अविभागाधिकरणम् ॥ ४ ॥

(४) ॐ **अविभागेन दृष्टत्वात्** ॐ ॥ अविभागेन परमात्ममुक्तभोगान्। क्रमेणैव मुक्तैः भोगाः भुज्यन्ते। कुतः दृष्टत्वात् "यानेवाहम्" इति (चतुर्वेद शि०) श्रुतेरित्यर्थः ॥ १ ॥

## ॥ ब्राह्माधिकरणम् ॥ ५ ॥

(५) ॐ **ब्राह्मेण जैमिनिरुपन्यासादिभ्यः** ॐ ॥ ब्राह्मेण ब्रह्मसम्बन्धिदेहेनैव। मुक्तो भोगान भुङ्क्ते। कुतः उपन्यासादिभ्यः ब्रह्मणेति

(माध्यन्दिनायन) श्रुतेः । आदिपदोक्तादत्त इति स्मृतेर्युक्तेश्चेति जैमिन्याचार्यो मन्यत इत्यर्थः ॥ १ ॥

(६) ॐ **चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः** ॐ ॥ चितिमात्रेण ज्ञानैकस्वरूपदेहेन । मुक्तो भोगान्भुङ्क्ते । कुतः तदात्मकत्वात् । चिन्मात्रदेहस्यैव मुक्तस्वरूपत्वात् । तस्य च संसृत्यहेतुत्वादित्यौडुलोमिराचार्यो मन्यत इत्यर्थः ॥ २ ॥

(७) ॐ **एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः** ॐ ॥ एवं औडुलोम्युक्तप्रकारस्य । उपन्यासात् "स वा एषः" इति (सौपर्ण) श्रुतावुक्तत्वात् । पूर्वभावात् पूर्वस्मिन् जैमिन्युक्तपक्षेऽपि भावात् प्रमाणसद्भावात् । अविरोधं पक्षद्वयस्याविरोधम् । बादरायणाचार्यो मन्यत इत्यर्थः ॥ ३ ॥

## ॥ सङ्कल्पाधिकरणम् ॥ ६ ॥

(८) ॐ **सङ्कल्पादेव च तच्छ्रुतेः** ॐ ॥ चो विरुद्धपक्षव्यावृत्त्यर्थः । सङ्कल्पादेव स्वेच्छानुसारेणैव मुक्ता भोगान् भुञ्जते । कुतः तच्छ्रुतेः तस्मिन्नर्थे स यदीति (छां. ८-२-१.) श्रुतेरित्यर्थः ॥ १ ॥

## ॥ अनन्याधिपत्यधिकरणम् ॥ ७ ॥

(९) ॐ **अत एव चानन्याधिपतिः** ॐ ॥ चशब्दो विरुद्धशङ्काव्यावर्तकः । अनन्याधिपतिः मुक्तः स्वोत्तमस्वकीयान्याधिपतियुक्तो न । कुतः अत एव सत्यसङ्कल्पत्वादेवेत्यर्थः ॥ १ ॥

## ॥ अभावाधिकरणम् ॥ ८ ॥

(१०) ॐ **अभावं बादरिराह ह्येवम्** ॐ ॥ प्राकृतदेहाभावमङ्गीकृत्य चिन्मात्रदेहेन मुक्तस्य भोगोऽस्ति । एवं बादरिराचार्यो मन्यते । कुतः हि यस्मात् । अभावं प्राकृतशरीराभावम् । "अशरीरो वाव" इति (कौण्ठरव्य) श्रुतिराह । तस्मादित्यर्थः ॥ १ ॥

(११) ॐ **भावं जैमिनिर्विकल्पाम्नानात्** ॐ ॥ जैमिनिः मुक्तानां भावं चिन्मात्रातिरिक्तदेहसद्भावं मन्यते । कुतः विकल्पाम्नानात् विकल्पस्योभयविधदेहस्याम्नानात् । चितावाऽचिता वेति (उद्दालक) श्रुत्या प्रतिपादनादित्यर्थः ॥ २ ॥

(१२) ॐ **द्वादशाहवदुभयविधं बादरायणोऽतः** ॐ ॥ बादरायणः उभयविधं प्राकृतदेहभावाभावाख्यम् । मतं स्वमतं मन्यते । कुतः अतः प्रमाणसद्भावात् । कथमेतद्युज्यते । द्वादशाहवत् यथा द्वादशाहात्मकः क्रतुरहीनसत्रोभयात्मकः तथैवेत्यर्थः ॥ ३ ॥

(१३) ॐ **तन्वभावे सन्ध्यवदुपपत्तेः** ॐ ॥ सन्ध्यवत् यथा स्वप्नावस्थायां बाह्यदेहाभावेऽपि भोगसम्बन्धः तद्वन्मुक्तावपि । तन्वभावेऽपि प्राकृतदेहाभावेऽपि । उपपत्तेः भोगस्य युक्तत्वात् देहाभावपक्षो युज्यत इत्यर्थः ॥ ४ ॥

(१४) ॐ **भावे जाग्रद्वत्** ॐ ॥ जाग्रद्वत् यथा जाग्रदवस्थायाम् । देहसद्भावेऽपि भोगसम्भवः । तद्वन्मुक्तावपि । भावे प्राकृतदेहसद्भावेऽपि भोगो युज्यत इत्यर्थः ॥ ५ ॥

(१५) ॐ **प्रदीपवदावेशस्तथा हि दर्शयति** ॐ ॥ प्रदीपवत् यथा प्रदीपस्य दीपिकादिप्रवेशः तद्वत्तैलादिभोगः कार्ष्ण्याद्यभोगश्च । तद्वन्मुक्तानामावेशः जडशरीरप्रवेशः । तत्र साधुभोगानुभवः दुःखाद्यननुभवश्चास्ति । कुतः हि यस्मात् । "तीर्णो हि" इति (बृ. ६-३-२२.) श्रुतिः । तथा दर्शयति तथा प्रतिपादयति । तस्मादित्यर्थः ॥ ६ ॥

(१६) ॐ **स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि** ॐ ॥ "स्वर्गे लोके" इति (कठ. १-१२.) वाक्यं स्वाप्ययसम्पत्त्योरन्यतरापेक्षं अन्यतरविषयः । कुतः हि यस्मात् । अस्य चात्र पिता अपितेति

(बृ. ६-३-२२.) श्रुत्या सुतिमुक्तिविषयत्वं आविष्कृतं प्रकटीकृतम् । तस्मादित्यर्थः ॥ ७ ॥

## ॥ जगद्व्यापाराधिकरणम् ॥ ९ ॥

(१७) ॐ **जगद्व्यापारवर्जम्** ॐ ॥ मुक्तः जगत्सृष्ट्यादिव्यापारवर्जं यथा भवति तथा सर्वान्कामानाप्नोतीत्यर्थः ॥ १ ॥

(१८) ॐ **प्रकरणादसन्निहितत्वाच्च** ॐ ॥ चशब्दः साध्यसमुच्चये । " सर्वान् कामान् " इति (ऐ.आ. २-५-४.) श्रुतौ जीव उच्यते । कुतः प्रकरणात् अस्य वाक्यस्य जीवप्रकरणत्वात् । तथाच न तत्रा-सङ्कोचेन जीवस्य सर्वकामभोग उपयुज्यते । किन्तु सङ्कोचेनैव । कुतः असन्निहितत्वात् जीवानां जगद्व्यापारसामर्थ्यविदूरत्वादित्यर्थः ॥ ॥ २ ॥

(१९) ॐ **प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः** ॐ ॥ मुक्तानां जगदैश्वर्यमस्तीत्यङ्गीकार्यम् । कुतः प्रत्यक्षोपदेशात् " ता यो वेद " (तै. उ. १-५.) इति श्रुत्या स्फुटं मुक्तस्याखिलदेवतापूज्यत्वस्य प्रतिपादनादिति चेन्न । कुतः आधिकारिकमण्डलस्थोक्तेः अत्र वाक्ये मुक्तहिरण्यगर्भस्यैव मुक्तस्वस्वाधिकारनियुक्तदेवतासमूहपूज्यत्वाभि-धानादित्यर्थः ॥ ३ ॥

(२०) ॐ **विकारावर्ति च तथाहि दर्शयति** ॐ ॥ चो नञोऽनुकर्षणार्थः । मुक्तानां विकारावर्ति । विकारं संसारमावर्तयतीति विकारावर्ति । संसारविषयकव्यापारो न । कुतः " इमम् " इति (छां. ४-१५-६.) श्रुतिः तथा दर्शयति प्रतिपादयति तस्मादित्यर्थः ॥ ४ ॥

## ॥ स्थित्यधिकरणम् ॥ १० ॥

(२१) ॐ **स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने** ॐ ॥ मुक्तस्य एक-प्रकारेणैवावस्थितिः न तु वृद्धिह्रासौ स्तः । कुतः यतः स एषः

इत्यादि (जाबाल) श्रुतिः स्थितिमेकप्रकारेणैवावस्थानमाह । न केवलमेतावत्किन्तु प्रत्यक्षानुमाने च ज्ञानिप्रत्यक्षकारणाभावलिङ्गे चैवं श्रुत्युक्तार्थम् । दर्शयतः ज्ञापयतः । अत इत्यर्थः ॥ १ ॥

(२२) ॐ **भोगमात्रसाम्यलिङ्गाच्च** ॐ ॥ अन्यत्राविशेषं विना भोगमात्रस्य विशेषे सत्यपि मुक्तस्य साम्यशब्दितैकप्रकारोक्तिरूपलिङ्गात् न भोगविशेषः तद्वृद्ध्यादौ कारणमिति न मुक्तो वृद्ध्यादिमानित्यर्थः ॥ २ ॥

**॥ अनावृत्त्यधिकरणम् ॥ ११ ॥**

(२३) ॐ **अनावृत्तिः शब्दादनावृत्तिः शब्दात्** ॐ ॥ मुक्तस्यानावृत्तिः पुनरावृत्तिर्नास्ति । कुतः शब्दात् "न च पुनरावर्तते" इति (छां. ८-१५-१.) श्रुतेरित्यर्थः । द्विरुक्तिरुक्तार्थस्यैवमेवेत्यवधारणार्था ॥१॥

मन्मानसाम्बुजस्थेन हरिणा चेक्षयाञ्जसा ।
भूतिदायकया कृष्णः प्रीयतां कमलालयः ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण जगन्नाथयतिना कृतायां ब्रह्मसूत्रदीपिकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

श्रीमद्बादरायणप्रणीतब्रह्मसूत्राणां

# वर्णानुक्रमसूचिका

## अ



A

## आ

च

## प

## फ



## ब

## श

## स

# ग्रन्थोदाहृतप्रमाणाकराः

## आग्निवेश्यश्रुतिः

अथकस्मा । *१-७३**, २-२९८.
अंशोह्येष । २-२३३.
नप्राणःकिञ्चिदा । २-२७८, ४-३८.
नित्यानन्दो । २-२९५.
नित्यःपरो । २-२०९.
प्राणादिद् । २-२७५.

## अथर्वशिरश्श्रुतिः

अथकस्मा । २-१४३.

## अध्वर्यूणां श्रुतिः

यज्ञोविष्णु । १-१४४.

## अध्यात्मम्

ऋतेदेवान् । ४-७७.
गत्यनुस्मरणात् । ४-६५.
दर्शनेन । ३-२२३.
दृष्ट्यैव । ३-२२०.
देवानांभूति । ३-२९४.
सत्याद्या । ३-१९३.
हृदिस्थेनैव । ४-५८.
ज्ञानंचोपासनं । ३-१८३.

## आग्नेयपुराणम्

यथानदीनां । ३-१४०.
यथाश्लेषो । ४-२५.
यस्यज्ञानंतस्य । ३-२७८.
विधिशेषाणि । ३-१४३.

## आदित्यपुराणम्

बहुनात्रकिमुक्तेन । १-२४४, ४-११३.

## आपस्तम्बश्रौतसूत्रम्

८-१-१. अक्षय्यंहवै । ३-१३.
१०-२-१. ज्योतिष्टोमेन । ३-३७.
१०-२-८. सोमेन । ३-१४३.

## इन्द्रद्युम्नशाखा

अथयथर्षीन् । ३-२९९.
एष उ एव । १-१६९.

## ईशावास्योपनिषत्

२. कुर्वन्नेवेह । ३-२४९.
८. कविर्मनीषी । २-४६.
१६. योसावसौ । १-१०९, ११४.
१६. सोऽहमस्मि । १-११४.

## उद्दालकश्रुतिः

सर्ववाएते । ४-९३.
सवाएष । ४-१००.

## ऋक्संहिता

१-१-१. अग्निमीळे । १-३९७.
१-२-१. वायवायाहि । १-३९७.
१-१७-७. इन्द्रावरुणवा । १-४१.
१-२२-२०. दिवीवचक्षुराततम् । २-२६८.
१-३५-१. ह्वयाम्यग्निं । १-२०२, ४-८९.
१-३५-२. हिरण्ययेन । १-२०२.

* अध्यायसंख्या ** पत्रसंख्या

## एकायनश्रुतिः



## ऐतरेयआरण्यकम्

## ऐतरेयब्राह्मणम्



## ऐतरेयोपनिषत्



## कठोपनिषत्

## कमठश्रुतिः



## काषायणश्रुतिः



## केनोपनिषत्



## कौण्ठरव्यश्रुतिः

## कौण्डिन्यश्रुतिः



## कौशीतक्युपनिषत्



## कौषारवश्रुतिः



D



## कौर्मपुराणम्



## गर्भोपनिषत्



## गारुडपुराणम्



## गीता

## गौतमधर्मसूत्रम्



## गौपवनश्रुतिः

## घृतसूक्तम्



## चतुर्वेदशिखा



## छान्दोग्योपनिषत्

## जाबालश्रुतिः



## जैमिनिः



## तलवकारब्राह्मणम्



## तुरश्रुतिः

## तैत्तिरियारण्यकम्



## तैत्तिरीयोपनिषत्

## तैत्तिरीयब्राह्मणम्

## पाराशर्यायणश्रुतिः



## पिप्पलादशाखा



## पुरुषोत्तमतन्त्रम्



## पैङ्गिश्रुतिः



## पाङ्गब्राह्मणम्



## पौत्रायणश्रुतिः



## पौष्यायणश्रुतिः

## प्रश्नोपनिषत्



## बह्वृचब्राह्मणम्



## बाष्कलश्रुतिः



## बृहच्छ्रुतिः



## बृहत्तन्त्रम्



## बृहत्संहिता



## बृहदारण्यकोपनिषत्

## ब्रह्मतर्कः



## ब्रह्मवैवर्तपुराणम्



## ब्रह्मसूक्तम्



## ब्रह्माण्डपुराणम्

## ब्राह्मपुराणम्



## भविष्यत्पर्वम्



## भविष्यत्पुराणम्



## भागवतम्

## भागवततन्त्रम्



## भाल्लवेयश्रुतिः



## मनुस्मृतिः



## महाकूर्मपुराणम्

## महानारायणोपनिषत्



## महाभारतम्



## महासंहिता



## महोपनिषत्



## माठरश्रुतिः

## माण्डव्यश्रुतिः



## माण्डूक्योपनिषत्



## मात्स्यपुराणम्



## माध्यन्दिनायनश्रुतिः



## मायावैभवः



## मुक्तिकोपनिषत्



## मुण्डकोपनिषत्

## मैत्र्युपनिषत्



## मोक्षधर्मः



## मौद्गल्यश्रुतिः



## मन्त्रप्रश्नः



## वत्सश्रुतिः



## वामनपुराणम्

## वायुप्रोक्तः



## वाराहसंहिता



## वाराहपुराणम्



## विष्णुपुराणम्



## विष्णुस्मृतिः



## व्यासस्मृतिः



## व्योमसंहिता



## शतपथब्राह्मणम्



## शब्दनिर्णयम्



## शाट्यायन

## शाण्डिल्यश्रुतिः



## श्वेताश्वतरोपनिषत्



## शैवपुराणम्



## सहस्रनाम



## सामशाखा



## सामसंहिता



## सुबालोपनिषत्



## मैत्रायणश्रुतिः



## सौपर्णश्रुतिः



## स्कान्दपुराणम्

# अनङ्किताकराः अनुपलभ्यमानाकराश्च

# अनुपलभ्यमानाकराः

## स्मृतयः

—:o:—

# शुद्धाशुद्धपत्रिका

## समन्वयाध्यायः

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १७ | विविक्षया | विवक्षया |
| ११ | २३ | यन्न | यत्र |
| ११ | २४ | तन्न | तत्र |
| २३ | १९ | अभिदायकौ | अभिधायकौ |
| ३० | १५ | पव्यते | पठ्यते |
| ३० | २६ | पूर्वै | पूर्वं |
| ३१ | १ | ...... | प्रकाशयन्त (भा-दी- पाठः) |
| ३२ | २८ | कुरु | कृधि |
| ३३ | ९ | वदिकाः | वैदिकाः |
| ४१ | ३ | ‘विश्वं | ‘विश्वं’ |
| ४१ | ४ | तमसः’ | ‘तमसः’ |
| ४२ | १७ | स्कारभि | स्कारमभि |
| ४६ | १ | अप्स्वन्तः | अप्स्व१अन्तः |
| ४९ | २० | अहं ··· अद्राक्षं | अहं न ··· अद्राक्षं |
| ५५ | २ | विष्णाविति | विष्णविति |
| ५५ | २४ | कश्चित् | कश्चित् |
| ५५ | २५ | प्रथिव्या | पृथिव्या |
| ५८ | २२ | अस्मादा | अस्मदा |
| ५९ | ५ | महाकौर्मे | कौर्मे |
| ५९ | २१ | चतनत्वादि तर्क | चेतनत्वादि-तर्क |
| ६१ | १९ | सर्वे चेतनानां | सर्वा-चेतनानां |
| ६१ | २७ | ··· | देवताभ्युप-याचनेन तत्प्रार्थनेन |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६२ | ८ | समुच्चये | समुच्चये |
| ६४ | १२ | साङ्ख्यस्य | साङ्ख्यस्य (एवमन्यत्रापि) |
| ६६ | ६ | ७-२४ | १-३-२४ |
| ७१ | २३ | सम्पन्नत्वग्वि | सम्पन्न-त्स्वग्वि |
| ७२ | २४ | ब्रह्मण श्रुति | ब्रह्मणः श्रुति |
| ७२ | २५ | संभवति | न संभवति |
| ७२ | २६ | संभवति | न संभवति |
| ७६ | १२ | प्रकारेण | सर्वप्रकारेण |
| ७९ | ९ | कतृत्वेन | कर्तृत्वेन (अन्यत्राप्येवमेव) |
| ८० | २८ | शब्दादितो | शब्दोदितो |
| ८२ | ९ | स्वस्विन्नेव | स्वस्मिन्नेव |
| ९३ | १७ | पृथच्चेतु | पृथग्चेतु |
| १०१ | २१ | वदन् | वदत् |
| १०२ | २८ | त्यात्कृष्यते | त्याकृष्यते |
| १०४ | १६ | दिरुद्धम् | विरुद्धम् |
| ११२ | २८ | यामितया | यामिपरतया |
| ११८ | ४ | किन्तुं | किन्तु |
| १२१ | १२ | न्तस्थ | न्तस्स्थ (अन्यत्राप्येवमेव) |
| १२३ | १४ | वीयत्वादि | वीर्यत्वादि |
| १३२ | १२ | वक्षस्थल | वक्षस्स्थल |
| १४० | २३ | त्युपस्करेण | त्युपस्कारेण |
| १५२ | १९ | बल | प्रबल |
| १५६ | ८ | किन्विति | किन्न्विति |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १५६ | १५ | व्याचष्ठे | व्याचष्टे | २४३ | ४ | महना | महाना |
| १५८ | २४ | हरिः । | । हरिः | २४५ | ९ | व्याचिख्युः | व्याचख्युः |
| १५९ | १७ | भाव | भावः | २४७ | २६ | कृत्य | कृत्या |
| १६६ | १ | देवः | देव | २४९ | २२ | विष्णवंक | विष्णवेक |
| १६८ | १० | भागोऽस्ति | भागो अस्ति | २५८ | ५ | प्रति | प्राति |
| १७१ | २६ | व्यर्थ | र्व्यर्था | २६० | ५, ६ | यदा · · एति | (यदा · · · एति) |
| १७७ | २० | वसुदेवे | वासुदेवे | | | | |
| १९५ | १९ | सिद्धा | सिद्धा | २६१ | ७ | चैधि | च 'एधि' |
| १९५ | २३ | शब्द | रसशब्द | २६३ | २२ | बाह्लं | बाह्यं |
| १९५ | २५ | हेतु | हेतू | २६४ | २३ | मात्र | मात्रा |
| १९६ | ९ | अभयं ? | अभयं | २६५ | ११ | व्यापक | ऽव्यापकः |
| २०० | १४ | ब्रह्माखिल | 'ब्रह्म' अखिल | २७१ | १४ | न्वैष्टर्व्यं | न्वैष्टव्यं |
| | | | | २७३ | १८ | विष्णो | विष्णु |
| २०३ | १९ | तदर्चिषं | तदा अर्चिषं | २७६ | ८ | अहरहो | अहरहः |
| २०६ | ९ | याज्ञ्य | याज्ञ (एवं मन्यत्र) | २७७ | १६ | निश्रयो | निश्चयो |
| | | | | २७८ | २४ | श्रुति | श्रुति |
| २०७ | २५ | पृथिव्या-मन्तरः | पृथिव्या अन्तरः | २८१ | १३ | तैत्तिरीय | महानारायण |
| | | | | २८४ | १० | व्यक्तःस्वरूपः | व्यक्तं स्वरूपं |
| २०८ | २७ | सर्वत्राधि | ज्योतिरधि | २८५ | २७ | प्राकृत | अप्राकृत |
| २१२ | ७ | त्वाद्याभाव | त्वाद्यभाव | २८८ | २० | आहिः | आदिः |
| २१२ | २७ | निष्टत्व | निष्ठत्व | २९२ | २६ | व्याख्याति | व्याख्यांति |
| २१३ | १२ | वशिष्ट | वसिष्ठ | २९३ | १२ | आथवेण | आथर्वण (४-१३) |
| २१४ | २८ | अत्राधि | अत्रधि | | | | |
| २१६ | २० | प्रवृत्ति | प्रवृत्त | २९९ | २३ | इति | इति । |
| २१८ | १५ | सार्वज्ञ्यं | सार्वज्ञं | ३०२ | २२ | मेव | मेवं |
| २२७ | १५ | सर्वधम | सर्वधर्म | ३०४ | ३ | निर्धारण | निर्धारणं |
| २२९ | १८ | एतमि | एनमि | ३०४ | ८ | मेव | मेन |
| २३० | ५ | ह्यैव | ह्येव | ३१५ | १८ | यथर्तुर्षु | यथर्तुषु |
| २३० | १५ | ज्ञायते | ज्ञायते | ३१५ | २४ | नपरानपरान् | नपरानमरान् |
| २३७ | २७ | सर्वनाम | सर्वनामा | ३१९ | १८ | दितीया | द्वितीया |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३२५ | १६ | इति | इति। |
| ३२६ | ११ | बुध्यादि | बुद्ध्यादि |
| ३३१ | १७ | प्रायुक्त | |
| ३३७ | १६ | मुपेय | मुपेया |
| ३३८ | २० | सवथा | सर्वथा |
| ३३९ | ३ | क्षत्रियः | क्षत्रिय |
| ३४५ | १० | सञ्श्ररण | सञ्चरण |
| ३५४ | २१ | सव | सर्व |
| ३५५ | २४ | सौम्य | सोम्य |
| ३५६ | ६ | वैय्यर्थ्य | वैयर्थ्य (एवमन्यत्र) |
| ३६० | ५ | इतरस्य | इतरस्य न |
| ३६६ | ११ | माव्यक्त | मव्यक्त |
| ३६६ | २६ | प्राधान | प्रधान |
| ३६८ | ७ | शव्द् | शब्द् |
| ३७३ | ५ | श्रुतेः | |
| ३७४ | १४ | धाधायक | कर्माद्यभि-धायक |
| ३७९ | २५ | नियमक | नियामक |
| ३८१ | १ | पञ्च | पञ्चपञ्च |
| ३८२ | १८ | हीसा | ह्रास |
| ३८३ | १ | पञ्चकम् | पञ्चकम् |
| ३८३ | ७ | मिन्न | भिन्न |
| ३९१ | १५ | अन्त | अन्य |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३९३ | २३ | मृन्मयं | मृण्मयं |
| ४०५ | १६ | स्त्रीलिङ्ग | स्त्रीपुल्लिङ्ग |
| ४०५ | २० | त्रयादि | क्रयादि |
| ४०५ | २१ | तच्छव्द | तत्तच्छब्द |
| ४०५ | २८ | पदयोर्स्त्री | पदयोः स्त्री |
| ४०६ | ५ | नाशानाश | नाशानाश |
| ४०८ | २४ | नैव | नैवं |
| ४०९ | १४ | द्रुत | द्रुत |
| ४०९ | २४ | इतिरावर्तते | इति चावर्तते |

## सूत्रदीपिकायां समन्वयाध्यायः

| | | | |
|---|---|---|---|
| १ | ८ | सिह्यं | सिंहं |
| ४ | ७ | अन्तस्थ | अन्तस्स्थ |
| १० | १८ | एतदमृतत्व | अमृतत्व |
| १२ | ५ | एवं | एनं |
| २० | ९ | बुध्यादे | बुद्ध्यादे |
| २० | २० | प्रतिकल्पं। | प्रतिकल्पं |
| २० | २२ | सिध्यति | सिद्ध्यति |
| २५ | १६ | शरीरसमे | शरीरसमे, |
| | | कुत्सितत्वात्। | कुत्सितत्वात् वस्तुतः |
| | | ...प्रधानादौ | अशरीरं, प्रधानादौ |
| ३० | २० | मायान्तु | मायांतु |

## विरोधाध्यायः

| | | | |
|---|---|---|---|
| ९ | १३ | दोषत्वं | दोषित्वं |
| १५ | २० | परिछिन्न | परिच्छिन्न |
| ३१ | २० | अभेदसिद्धः | अभेदः सिद्धः |
| ३२ | २८ | तादात्म्य | तादात्म्यं |
| ३६ | १४ | कारणस्य | करणस्य |
| ५३ | २३ | तथोऽच्यते | तथोच्यते |
| ५७ | १६ | न चति | न चेति |
| ५७ | २६ | एतादृशी | तादृशी |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८ | २७ | त्तसा | त्तत्सा |
| ५९ | ६ | इति, | इति |
| ६४ | २३ | टीकाया | टीकायां (टीकया) |
| ६६ | १ | स दोषः | सदोषः |
| ६९ | १३ | भावनीति | भाविनीति |
| ७१ | २३ | फलापेक्षि-तत्वेऽपि | फलापेक्षि-त्वेऽपि |
| ७९ | ५,१४ | वैपस्य | वैषम्य |
| ८० | १२ | नियमा-स्तद्रूपा | नियमाऽ-तद्रूपा |
| ८३ | २६ | प्रेरित | प्रेरिता |
| ८४ | ५ | रचनपद | रचनापद |
| ८९ | १९ | सव | सर्वं |
| ९० | ४ | तृणा | तृणा |
| ९१ | १३ | त्यर्थ | त्यर्थः |
| ११५ | १९ | निल | नील |
| १२२ | १४ | स्येनु | स्येत्यनु |
| १२७ | ९ | परमाण | परिमाण |
| १२८ | १० | परतन्त्र | पारतन्त्र्य |
| १३६ | १३ | जिगुप्सित | जुगुप्सित |
| १३८ | २३ | स्वं | खं |
| १३९ | २८ | नाश्रयत | नाश्रीयत |
| १४१ | २६ | सदित्व | सादित्व |
| १४४ | ८ | पोष्कल्य | पौष्कल्य |
| १४५ | २१ | ब्रह्मिण | ब्रह्मणि |
| १४६ | ७ | रूक्तेः | रुक्तेः |
| १५४ | २६ | स्तुः | स्तु |
| १५५ | ८ | रूच्यते | रुच्यते |
| १५९ | २४ | एभ्यः | येभ्यः |
| १६० | २ | दिर्भेदैः | दिर्भेदैः |
| १७२ | ८ | भयो | भूयो |
| १७५ | १५ | विग्रहः | विग्रहे |
| १७८ | २७ | सामत्स्यं | सामस्त्यं |
| १८२ | ६ | कारणा | कारण |
| १८९ | २० | एतावदेव | एतावत्येव |
| १९१ | १७ | गृहितः | गृहीतः |
| १९२ | ३ | तत्कृं | तच्छ्रु |
| १९३ | २२ | विष्णवैक | विष्णवेक |
| १९५ | १४ | द्वित्व | द्वित्वे |
| १९७ | २२ | ज्ञानयोग | ज्ञानायोग |
| २०१ | २३ | हाणुन | ह्यणुनः |
| २०४ | १७ | ईश्वरस्थ | ईश्वरस्य |
| २२५ | २५ | कर्तृकत्वं | कर्तृत्वं |
| २३६ | २ | तथा च | यथा |
| २३८ | १४ | दैत्त्यैः | दैत्यैः |
| २४२ | २५ | व्यख्येयम् | व्याख्येयम् |
| २४४ | १९ | एते | पते |
| २६३ | १५ | सामर्थत्वात् | समर्थत्वात् |
| २६८ | ७ | तस्मान् | तस्मात् |
| २६९ | २३ | त्मुक्तम् | त्युक्तम् |
| २७५ | १४ | व्यक्ति | व्यति |
| २९० | १८ | व्रश्चतो | वृश्चतः |
| २९५ | २२ | व्याख्वातः | व्याख्यातः |
| ३०८ | १४ | प्राचुर्थ | प्राचुर्य |
| ३०९ | १३ | द्विरुक्तः | द्विरुक्तेः |

## सूत्रदीपिकायां अविरोधाध्यायः

| | | | |
|---|---|---|---|
| १३ | ११ | त्पत्तावकार्या | त्पत्तौ कार्या |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २४ | १९ | वरणगता-दित्यर्थः | वरणाभावा-दित्यर्थः | ३१ | ४ | करणाभिन्न-त्वात् | करणभिन्न-त्वात्, |
| ३१ | ३ | प्राणस्य | प्राणस्या | | | | |

## साधनाध्यायः

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २७ | १० | लक्ष्यत्वे | लक्षणत्वे | १०१ | १४ | भक्तयाति | भक्तयति |
| २८ | १२ | सूत्र | सूत्रे | १०२ | २५ | पप्रघाना | पप्रधाना |
| ३२ | ३ | वैतरणी | वैंतरणी | १०३ | ६ | आधत्त | अधत्त |
| ३६ | १८ | वृत्तीनि | वर्तीनि | १०३ | २३ | येन | एनाऽ |
| ३६ | २१ | इत्येव | इत्येवं | १०६ | ८ | निष्कळं | निष्कलं |
| ३६ | २१ | अन्यत् | अन्यत्तृ | १११ | १२ | स्यपि | स्यापि |
| ३७ | १८ | विद्यापथो | विद्यापथः | १२० | २६ | सुखान्ततनुम् | सुखां तनुम् |
| ४१ | १६ | समृद्ध | समिद्ध | १३१ | १३ | इश्रुतिरि | इश्रुतेरि |
| ४२ | १३ | वथित | वस्थित | १३८ | २७ | शाखा | शाखा |
| ४३ | १८ | विस्तु | विस्त | १४१ | ६ | स पञ्च | सपञ्च |
| ४३ | २२ | त्यथः | त्यर्थः | १४१ | १३ | ग्नये | ग्नेये |
| ४३ | २३ | तृतीय-तमस्सु | तृतीये तमस्सु | १४३ | ११ | शेपवादि | शेषाणि |
| | | | | १४८ | ११ | भगवान् | भगवन् |
| ५१ | २७ | रित्या | रीत्या | १४९ | १७ | सोत्र | सौत्र |
| ५४ | १६ | मातृ | मातु | १५२ | ३ | त्वेयापि | त्वेनापि |
| ६२ | २ | जाग्रत्वं | जाग्रत्त्वं | १५२ | २९ | त्वाहिति | त्वादिति |
| ६३ | ५ | भावभाव | भावाभाव | १५८ | २४ | धिकरणः | धिकारिणः |
| ७३ | १२ | ग्रह | गृह | १६१ | २८ | व्याख्यत | व्याख्यात |
| ८५ | १८ | अव्यक्तः | अव्यक्ततः | १६६ | १५ | कुवो | कुतो |
| ८५ | २७ | मास्त्य | मात्स्य | १७६ | १५ | सवर्हदि | सर्वेहृदि |
| ८६ | २७ | रूपाभावा | रूपाभाव | १७८ | ७ | सनन्तात् | सन्नन्तात् |
| ८७ | २८ | परमात्मानि | परमात्मनि | १७८ | ८ | अश | अर्शा |
| ८९ | १८ | र्याभाव | र्याद्यभाव | १८० | २ | तर्कम | तकर्मा |
| ९१ | ४ | अतः | अतएव | १८६ | १४ | उत्तरोत्तरो-त्तमत्वं | उत्तरोत्तर-मुत्तमत्वं |
| ९६ | ४ | तथैव | तयैव | | | | |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८९ | १५ | विष्णुो | विष्णो |
| १८९ | २० | द्भयो | द्भूयो |
| १९४ | १९ | दित्येत्स्व | दित्येतत्स्व |
| १९७ | १७ | मत्यादि | सत्यादि |
| २०० | २६ | यस्तुं | यस्तु |
| २०२ | २५ | परोक्षात् | पारोक्ष्यात् |
| २०४ | १५ | ग्वचनात् | गवचनात् |
| २१० | १० | सिद्धं समग्र | सिद्धमसमग्र |
| २११ | ७ | उपास्व | उपास्स्व |
| २१२ | २, ८, १० | उपास्व | उपास्स्व |
| २१६ | २२ | स्नेह | स्स्नेह |
| २१७ | २१ | समन्ये | सामान्ये |
| २१९ | १७ | पात्या | पास्त्या |
| २२१ | १२ | सत्या | तस्या |
| २२१ | १२ | उपलब्धः | उपलब्धेः |
| २२७ | ८ | योग्यतयाः | योग्यतायाः |
| २३७ | ४, १२ | कामाधि | काम्याधि |
| २३८ | ६ | कामाधि | काम्याधि |
| २३९ | १२ | कामाधि | काम्याधि |
| २६० | २५ | कुर्वेति | कुर्विति |
| २६० | २६ | स्तुत | स्स्तुत |
| २६३ | २५ | रऋण | ॠण |
| २६४ | ६ | न तु, | न तु |
| २६७ | २ | संतुष्टः | सन्तुष्टः |
| २७२ | १३ | भूर्थ | भूतार्थ |
| २७७ | १६ | ज्ञनिनो | ज्ञानिनो |
| २८० | २० | जीविष्यामि | न जीविष्यामि |
| २८० | २८ | अन्यय्येति | अन्यायेति |
| २८१ | २२ | ङ्कर्क | ङ्कर्क |
| २८४ | ५ | इति | इति च |
| २८५ | २ | इति | इति च |
| २८६ | २० | च्छेदं | श्छेदं |
| २८६ | २६ | क्षात्मेति | क्षणात्मेति |
| २८७ | १५ | वर्षसहस्राणि | वर्षाणि |
| २८८ | २५ | मा स्तु | माऽस्तु |
| २९१ | २२ | निश्चैकां | निश्चायिकां |
| २९६ | १२ | क्षांन्वये | क्षान्वये |
| २९८ | १६ | अरुरु | आरुरु |
| २९८ | २३ | वैषेशि | वेशेषि |
| ३०० | १२ | द्दष्टिः | द्दषिः |
| ३०२ | १२ | प्रहाणि | प्रहाण |
| ३०७ | २८ | णासिद्धं | णसिद्धं |
| ३१० | ७ | यती | यति |
| ३११ | १९ | अप्यन्तः | अप्यन्तं |
| ३१३ | २३ | स्स्पते | स्पते |
| ३१४ | ७ | अकांक्षा | आकांक्षा |
| ३१९ | १ | विधमा | विधर्मी |

## सूत्रदीपिकायां साधनाध्यायः

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १७ | कौण्डिण्य | कौण्डिन्य |
| ७ | १ | कर्मासिद्धं | कर्माशुद्धम |
| ८ | ११ | व्यक्ति | व्यक्त |
| १७ | १२ | पृथत्कात् | पृथक्कात् |
| १८ | १९ | गुणैः | र्गुणैः |
| १९ | ७ | स्येवे | स्त्येवे |
| २० | ९ | र्थ्यः | र्भ्यः |
| २० | १३ | क्लृ | कृ |
| २२ | ८ | आदि | अपि |
| २२ | १० | सर्वस्योपास्ये | सर्वोपास्ये |

शुद्धाशुद्धपत्रिका

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २६ | २३ | वृषभहंस | वृषभाग्निहंस |
| २६ | २३ | वाय्वग्नि-वरुणेभ्यः | वाय्वग्नि-ब्रह्मवरुणेभ्यः |
| २८ | २३ | त्वनु | त्वनु |
| ३० | ६ | ष्रेय | ष्ठ्रेय |
| ३४ | ७ | यथेष्ठा | यथेष्ट |
| ३५ | २० | इच्छाभाव | इच्छा । भाव |
| ४१ | ६ | प्रतिवन्ध | प्रतिबन्धे |

## फलाध्यायः

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १४ | चतदात्मा | चतदात्मा |
| ४ | २५ | सार्वज्ञत्वो | सार्वज्ञो |
| ६ | २ | इति | इत्यपि |
| ६ | ९ | त्मनोऽयं | त्मनोऽन्यं |
| ७ | ७ | उपासीत | उपास्ते |
| ११ | ११ | तस्यार्थः | । तस्यार्थः |
| १६ | ९ | त्याज्यो | त्याज्ये |
| १७ | १२ | विपया-नुक्तिः | विपया-नुक्तिः । |
| १९ | २८ | ध्यनो | ध्यानो |
| २२ | १७ | तोऽप्या | तोऽपीत्या |
| २३ | ५ | लिप्यते | श्लिष्यते |
| २३ | २३ | व्यख्यन | व्याख्यान |
| २४ | १२ | समन | समान |
| २४ | १५ | प्रंकृत | प्रकृत |
| २४ | २३ | पापस्य | पापस्या-संश्लेपः |
| २६ | १३ | तावावेव | तावानेव |
| २६ | २३ | पक्ष्यतो | पश्यतो |
| २७ | ७ | पक्ष्यत | पश्यत |
| ६८ | १ | दिविप | दिर्विप |
| ७४ | २५ | शैग्नु | शैंग्नु |
| ९५ | २१ | देहाभाव॰ | देहभाव |
| ११८ | १६ | वृद्धिह्रासो | वृद्धिह्रासश्च |
| ११९ | २ | वृद्धिह्रासश्च | वृद्धिह्रासश्च |
| ११९ | २३ | उयासीनस्य | उदासीनस्य |
| १२० | २० | अत्र से | अत्रसे |
| १२२ | २६ | हरणाविरो-घात् | हरणाविरो-धान् |

## सूत्रदीपिकायां फलाध्यायः

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | ८ | समुच्चयो | समुच्चये |
| ११ | १२ | वाञ्छिति | वाञ्छति |
| १४ | २३ | विषयः | विषयं |

## सूत्राणां वर्णानुक्रमसूचिका

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | २३ | | २-३-३, २-४-२ |
| १४ | २९ | | प्रज्ञान्तरपृथ-क्त्ववद्दृष्टिश्च तदुक्तम् ३-३-५२ |

---